ॐ परमात्मने नमः ॥

# न्यायसिद्धान्तमञ्जरी ।

## भट्टाचार्यचूडामणिजानकीनाथविरचिता ।

श्रीयादवाचार्यविरचितन्यायमञ्जरी-
साराख्यटीकासहिता ।

प्रणम्य परमात्मानं जानकीनाथशर्मणा ।
क्रियते युक्तिमुक्ताभिर्न्यायसिद्धान्तमञ्जरी ॥ १ ॥

श्रीगणेशाय नमः ॥ श्रीविश्वेशपदारक्तपद्मद्वन्द्वं निरन्तरम् । ध्यात्वा गङ्गां तथा दुर्गां स्वाभीष्टं साधयाम्यहम् ॥ १ ॥ भट्टाचार्यचक्रवर्त्तिरामकृष्णं जगद्गुरुं । श्रीमद्व्यासनृसिंहं च नतग्रीवो नमाम्यहम् ॥ २ ॥ श्रीमद्व्यासनृसिंहानां सूनुः करोति यादवः । श्रीवत्सबालकृष्णस्य मञ्जरीकौतुकं कृते ॥ ३ ॥ दोषबुद्धिर्न कर्त्तव्या नूतने कौतुके मम । न दुष्टो नूतनश्चन्द्रो निखिलैर्वन्द्यतेऽपि सः ॥ ४ ॥ शिवचरणसरोजद्वन्द्वमालम्बितश्चेत्त्रिभुवनविवरे किं किं न शक्यं जनानाम् । अहमपि सततं तं विश्वनाथं भजामि तदिह नवनिबन्धे नोपहासो मदीयः ॥ ५ ॥ सर्वेषु कार्येषु महेश्वरस्य हेतुत्वसिद्धौ यदहं तु गौणः । अस्मानभिज्ञाः पुरुषाधमा ये निन्दन्ति निन्दन्तु कृतिं मदीयाम् ॥ ६ ॥ प्रारब्धकर्मप्रतिबन्धकीभूतदुरितनिवृत्तये कायवाङ्मनोभिः कृतं परमात्मनमस्कारं शिष्यशिक्षायै निबन्धन् प्रेक्षावत्प्रवृत्त्यर्थं प्रतिपाद्यमाह । प्रणम्येति । प्रणम्य भक्तिश्रद्धारूपातिशयपूर्वकं नमस्कृत्य । भक्तिश्चाराध्यत्वेन ज्ञानं । श्रद्धा च फलावश्यंभावनिश्चयः । ईदृशातिशयस्य प्रशब्दो द्योतको न तु वाचक इति । द्योतकत्वं तात्पर्यग्राहकत्वं । विवेचयिष्यते चेदं शब्दमञ्जरीकौतुके । परमेति । परमश्चासावात्मा च परमात्मा । अत्र परमत्वं भ्रमरहि-

तत्वं । तथा च परमात्मानं भ्रमरहितात्मानमित्यर्थः घटादेर्भ्रमरहितत्वादात्मपदं । चेत्रज्ञस्य भ्रान्तत्वात्परमपदं। एतेन परमत्वं सर्वज्ञत्वमिति परास्तं । कर्मधारयस्यपदद्वयस्य व्यावर्त्तकत्वनियमेनात्मपदवैयर्थ्यापातात् । ननु यथात्ममनःसंयोगाधिकरणमात्मा तथा मनोपीति मनसि सुखोत्पत्तिः स्यादतः समवायसंबन्धेन यत्र सुखं तत्र तादात्म्यसंबन्धेनात्मेति । सुखसमवायिकारणतावच्छेदकत्त्वेन सिद्धमात्मत्वं कथमीश्वरे भविष्यतीति चेन्न । ज्ञानवत्वरूपात्मत्वस्यात्र विवक्षितत्वात् । एतेन शिवे तादृशात्मत्वाभावप्रयुक्तदशमद्रव्यत्वापत्तिरपि निरस्ता । यद्वा जीवात्मनि सिद्धस्यात्मत्वस्यात्मपदशक्यतावच्छेदकत्वे सिद्धे परमात्मन्यपि श्रुत्यादिभिरात्मपदप्रयोगादीश्वरे ऽपि तदेवात्मत्वं बोध्यम् । न च सुखसमवायिकारणतावच्छेदकात्मत्वस्योभयत्र सत्वाज्जीव इव शिवे ऽपि कथं न सुखाद्युत्पत्तिरिति वाच्यम् । धर्मादिरूपकारणविरहात् । नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियम इति व्याप्तौ प्रमाणाभाव इति संक्षेपः । ननु मङ्गलस्य कारणताविघ्नध्वंसं प्रति समाप्तिम्प्रति वा नान्वयव्यतिरेकसहकृतप्रत्यक्षगम्या सत्यपि मङ्गले कादम्बर्यादौ समाप्तेरभावाद्विनापि मङ्गलं प्रमत्तनास्तिकानुष्ठितग्रन्थे निर्विघ्नसमाप्तिदर्शनाच्चेति चेन्न । मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वात् । दर्शवदित्यनुमानेन मङ्गलस्य सफलत्वे सिद्धे फलजिज्ञासायां विश्वजिन्न्यायात्स्वर्गफलकल्पने गौरवात् समाप्तिरूपदृष्टफलकत्व कल्प्यते । तथा च सत्यपि मङ्गले यत्र न समाप्तिस्तत्र विघ्नप्राबल्यं विघ्नबाहुल्यं वा कल्प्यते । बहुतरविघ्नानां प्रबलविघ्नस्य वा बहुतरमङ्गलनाश्यत्वात् । न च तथा ऽपि कादम्बर्यादौ प्रतिबन्धकसत्वे तावती कादम्बरी कथं जातेति वाच्यम् । विघ्नानां साक्षाद्विरोधित्वाभावात् । किं तु स्वजन्यनृपाद्युपद्रवद्वारा । तथा च मङ्गलाद्यावत्कालीनोपद्रावकादृष्टनाशस्तावत्काले कादम्बरी जाता पुनरग्रे विघ्नात्प्रतिबन्धो जात इति । एवं च बहुतरविघ्नशङ्कया ऽपि बहुतरमङ्गलाचरणं तदुक्तमाचार्यैः न हि घनमुक्तमुद्गरमेकस्तृणस्तम्बो न निवारयतीति तत्समुदितं नोपादेयमिति । न च विघ्नसन्देहे कथं मङ्गलाचरणमिति वाच्यम् ।

विघ्नसन्देहे ऽपि तदा चरणस्योचितत्वात् । अत एव शङ्कितानिष्टनिवारणाय प्रवर्त्तन्ते परीक्षका इति सङ्गच्छते तदुक्तमाचार्यैः । अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्निति । प्रमत्तानुष्ठितग्रन्थे च जन्मान्तरीयमङ्गलकल्पनान्न दोषलेशो ऽपीति संक्षेपः । अत्र नव्याः तृणारणिमणिन्यायेन विघ्नध्वंसविशेष एव मङ्गलस्य फलं विघ्नध्वंसविशेषान्तरं च विनायकस्तवपाठादेः फलं । समाप्तिस्तु विघ्नसंसर्गाभावादिकारणकलापजन्या । अत एव स्वतःसिद्धविघ्नविरहस्थले न दोषः । तत्र विघ्नात्यन्ताभावस्य सत्वात् । न च स्वतःसिद्धविघ्नविरहस्थले मङ्गलेन विघ्नध्वंसाजननात् तद्बोधकवेदाप्रामाण्यमिति वाच्यम् । सति दुरिते प्रायश्चित्तनाश्यत्ववत्सति विघ्ने मङ्गलनाश्यत्वस्य वेदबोधितत्वादिति । प्रमत्तानुष्ठितग्रन्थे च जन्मान्तरीयमङ्गलजन्यस्य जन्मान्तरीयविनायकस्तवपाठादिजन्यस्य वा विघ्नध्वंसस्य स्वतःसिद्धविघ्नविरहस्य वा सत्वान्न दोष इत्याहुः । भ्रान्तप्रलपितत्वशङ्कानिरासाय स्वस्य ग्रन्थस्य च नाम निबध्नाति जानकीनाथेति । युक्तिमुक्ताभिरिति युक्तय एव मुक्ताः युक्तिमुक्तास्ताभिरित्यर्थः । तथा च यथा मुक्ताभिर्निर्मितं वस्तु पुण्यजनैः प्राप्यं तथा युक्तिमुक्ताभिर्निर्मिता मञ्जरी पुण्यजनैर्बोध्येति ध्वनितम् । न्यायसिद्धान्तमञ्जरीति नीयते प्राप्यते विवक्षितो ऽर्थः पञ्चावयवाक्यरूपः स न्यायस्तेषां मञ्जरी तथा च न्यायसिद्धान्तप्रतिपादिका मञ्जरी । तथा च न्यायसिद्धान्ता एवात्र प्रतिपाद्याः न्यायसिद्धान्तग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः संबन्ध इति दर्शितम् ।

**इह किल निखिललोकविमोक्षमुख्योपायं मननोपायमात्मनस्तत्वज्ञानमामनन्ति ।**

प्रयोजनं दर्शयितुमाह इह किलेत्यादि । अथ वा धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मोक्ष एव परमपुरुषार्थः । सचात्मतत्वज्ञानाधीनस्तत्वज्ञानं प्रमाणाधीनमित्याह इह किलेत्यादिना । इह लोके किलेति वाक्यालङ्कारे निखिला ये लोकास्तेषां यो विमोक्षः नित्यसुखाभि-

व्यक्तिरूपः । आत्यन्तिकदुःखध्वंसो वा मोक्षस्तदुपायं तद्धेतुभूतं । मननं उपायो यस्य तन्मननोपाय । एतादृशं यदात्मनस्तत्त्वज्ञानं तदामनन्ति इच्छन्ति । ननु निखिललोकान्तर्गतानां शूद्राणामध्यापने ग्रन्थकर्त्तुर्मुनेश्चप्रत्यवायः स्यात् गुरुनिगदितशब्दप्रयोज्यार्थज्ञानमध्ययनं तत्प्रयोजकत्वं चोभयोरस्त्येवेति चेन्न । अध्यापकत्वस्य तच्छरीरावच्छिन्नोद्देश्यक शब्दप्रयोक्तृत्वरूपत्वात् । अत एव चैत्रमुद्दिश्य गुरुणाऽध्यापने विधीयमाने-उदासीनमैत्रेणश्रवणे मैत्रस्य नाध्ययनकर्तृत्वव्यवहारः । न च ग्रन्थस्य निखिलोद्देश्यत्वे शूद्रोद्देश्यता केन वार्येति वाच्यम् । शूद्रोपलक्षितात्मनोऽपि ब्राह्मणशरीरपरिग्रहदशायामुद्देश्यतायाः सत्वात् इति संक्षेपः । तदुक्तं प्रत्यक्षदीधितौ शिरोमणिभट्टाचार्य्यैः 'उद्देश्यता तु कीटपतङ्गादीनामपीति' अत्र मोक्षो मुख्यं प्रयोजनं । व्युत्पत्तिरवान्तरप्रयोजनं । प्रयोजनकामो मुमुक्षुः परमोऽधिकारी । अवान्तरोव्युत्पित्सुरित्यनुबन्धचतुष्टयो बोध्याः । अनुबन्धाश्च विषयप्रयोजनसम्बन्धाधिकारिणः । विषयश्च प्रतिपाद्यार्थरूपः प्रयोजनं च यदुद्दिश्यपुरुषः प्रवर्त्तते तत् । सम्बन्धः प्रतिपाद्यप्रतिपादकभावरूपः । प्रयोजनकामो ऽधिकारीति । तज्ज्ञानं विना प्रेक्षावतां प्रवृत्त्यभावात्तत्प्रदर्शनमावश्यकमिति दिक् । अत्र मोक्षः स्वसमानाधिकरणदुःखप्रागभावेनासमानकालीनं यद्दुःखं तस्य ध्वंसो न तु तादृशासमानकालीनो दुःखध्वंसः चरमदुःखोत्पत्तिदशायां दुःखप्रागभावासमानकालीनोपान्त्यदुःखध्वंसेऽति व्याप्तेः । उपान्त्यदुःखस्य तु चरमदुःखप्रागभावसमानकालीनत्वाद्विवक्षिते तु न दोषः । दुःखध्वंसो मोक्ष इत्युक्ते चैत्रादीनामिदानीतनदुःखध्वंसे ऽतिव्याप्तेरत उक्तं दुःखप्रागभावासमानकालीनेति दुःखविशेषणम् । न च तद्वारणार्थं दुःखासमानकालीनत्वेन दुःखध्वंसो विशेष्यतामिति वाच्यम् । सुषुप्तिदशाया मुक्तित्वापत्तेः । मुक्तिप्रतियोगिनः शुकदुःखस्यास्मादृशदुःखप्रागभावसमानकालीनत्वात्तदीयमुक्तावव्याप्तिरत उक्तं स्वसमानाधिकरणेति दुःखप्रागभावविशेषणं । एवं मुक्तिः तत्प्रतियोगि दुःखं । नन्विदमयुक्तं मोक्षस्य नित्यसुखाभिव्यक्तिरूपत्वात् । न च नित्ये सुखे मानाभाव इति वाच्यम् । नित्यवि-

ज्ञानमानन्दं ब्रह्म। आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति श्रुतेर्मानत्वादिति चेन्न। अभिव्यक्तेर्नित्यत्वे मुक्तसंसारिणोरविशेषापत्तेः। न चानित्यत्वमपि शरीरं विना तदुत्पत्तेरसम्भवात् ज्ञानमात्रे सुखमात्रे च शरीरस्य हेतुत्वात्। अत एव स्वर्गीय शरीरकल्पनापि संगच्छते। तथा चानन्दं ब्रह्मणो रूपमित्यादावानन्दपदेनानन्दवद्बुध्यते तेन सहाभेदबोधः। अन्यथाऽऽनन्दमित्यत्र मत्वर्थीयाच्प्रत्ययान्तत्वेन नपुंसकतानुपपत्तिरिति। विवेचयिष्यते चेदमुपरिष्टात्।

**तच्च प्रमाणाधीनमिति प्रमाणन्निरूप्यते तत्र प्रमायाः करणं प्रमाणं प्रमा च यथार्थानुभवः। तदाहुराचार्याः 'यथार्थानुभवो मानमिति'।**

तच्च तत्वज्ञानं प्रमाणाधीनमिति। अयमर्थः। प्रमाणैः पदार्थान्विविच्य श्रुतिस्मृतीतिहासपुराणोक्तविधिना निरवच्छिन्नतया बहुकालसेवितनिवृत्तिलक्षणधर्मादेव तत्वज्ञानं जायते। तत्वज्ञानाच्च मोक्ष इति। तत्र प्रमाणे निरूपणीये। कर्मधारयादिभ्रमनिरासाय षष्ठीतत्पुरुषेण व्याचष्टे प्रमाया इति। माकरणमित्युक्ते दुष्टेन्द्रिये ऽतिव्याप्तिः। दुष्टेन्द्रियस्य भ्रमजनकत्त्वादतः प्रपदमुक्तम्। करणं प्रमाणमित्युक्ते कुठारे ऽतिव्याप्तिरत उक्तं प्रमाया इति। प्रमाकारणमित्युक्ते चक्षुः संयोगादावतिव्याप्तिरत उक्तं करणमिति। ननु उत्पत्तिकाभिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ भ्रमानुमिति करणे सदनुमानेऽव्याप्तिरिति चेन्न। प्रमाकरणवृत्तिप्रमाणविभाजकोपाधिमत्वस्य विवक्षितत्वात् द्वितीयक्षणे प्रमानुमितेरपि जनकत्वाच्च।

नन्वितरभेदसाध्यकानुमितौ लक्षणं हेतुरिति सकलवादिसिद्धं तच्चात्र न सम्भवति। तथाहि। व्याप्तिज्ञानेन हेतुसाध्यसामानाधिकरण्य विषयी क्रियते। अनुमित्या तु पक्षतावच्छेदकसाध्यसामानाधिकरण्यमिति सकलवादिसिद्धं। तच्च प्रमाकरणत्वलक्षणरूपहेतुनेतरभेदसाधने यदि प्रमाणत्वं पक्षतावच्छेदकं तर्हि पक्षतावच्छेदकहेत्वोरैक्याद्भेद-

मित्या कर्त्तव्यं तद्व्याप्तिज्ञानेनैव कृतमिति सिद्धसाधनमिति चेन्न । प्रमात्वेन व्यवहर्त्तव्यत्वस्यैव पक्षतावच्छेदकत्वात् । तथा च प्रमाकरणत्वपहेतुपक्षतावच्छेदकयोर्भेदात् । साध्यनिष्ठविधेयतानिरूपितपक्षतावच्छेकनिष्ठधर्मितावच्छेदकीयविषयिताया व्याप्तिज्ञानेऽभावात् न सिद्धसानमिति । प्रमालक्षणघटकीभूता प्रमाकेत्यत आह प्रमा चेति । ज्ञानं मेत्युक्ते भ्रमेऽतिव्याप्तिस्तद्वारणाय यथार्थेति । स्मृतावतिव्याप्तिवारणानुभवेति । ननु यथार्थज्ञानस्यैव प्रमात्वमस्तु किमनुभवपदेन । न च तेः प्रमात्वनिवृत्त्यर्थन्तदिति वाच्यम् । तस्या अपि प्रमात्वे बाधकाभादिति चेन्न । स्मृतिरूपविलक्षणप्रमाकरणप्रमाणान्तरकल्पनापत्तेरित्यभियवानाचार्यसंमतिमाह तदाहुरिति । मानं मितिः । यद्वा मानजन्यं ात्मकं ज्ञानमित्यर्थः । वयं तु तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वं त्वं तद्भिन्नानुभवत्वं प्रमात्वमिति निर्विकल्पकस्यापि संग्रहः तथा च भिन्नानुभवकरणं प्रमाणमिति ब्रूमः ।

ननु किमिदं याथार्थ्यं किञ्चानुभवत्वं उच्यते इति तदवगाहित्वं याथार्थ्यं । भवति हि रजते दं रजतमिति ज्ञानं रजतत्ववति तदवगाहीति यथं । शुक्ताविदं रजतमिति ज्ञानञ्च न रजतत्ववति दवगाहीति न यथार्थं । नन्वेवं रजते इदं रजतन्नति संशयोऽपि प्रमास्यादिति चेत्सत्यं । रजतत्वांशे मैव तद्वति तदनुभवस्तत्प्रमेति प्रामाणिकाः । शाावच्छेन कपिसंयोगवति वृक्षे । मूले वृक्षः कपिसंयोाति प्रत्ययोऽपि प्रमास्यात्कपिसंयोगवति वृक्षे तदगाहित्वादिति चेन्न । वृक्षे कपिसंयोगप्रत्ययः प्रमैव शे ऽवच्छेदकत्वप्रत्ययस्तु न तथा तस्य तदनवच्छे-

**दकत्वात् स्मृतिभिन्नज्ञानत्वमनुभवत्वं जातिविशेषो वा । अनुभवामीति प्रतीतेर्बाधकं विना जाति विषयत्वात् ।**

तद्वतीति । अत्र विशेष्यत्वं सप्तम्यर्थः ॥ तेन ज्ञानवृत्तितत्प्रकारकत्वस्य रजताद्यवृत्तित्वेपि न क्षतिः । तथा च तद्वति रजतत्ववद्विशेष्यकत्वे सति तदवगाहित्वं रजतत्वप्रकारकत्वं । तदवगाहि । रजतत्वावगाहि । याथार्थ्ये व्यतिरेकं दर्शयति शुक्ताविति । एवं तद्वति तदवगाहित्वस्य यथार्थत्वे अंशे प्रमात्वव्यवस्थापनाय रजत इत्युक्तं । रजते इदं रजतं न वेति संशयो हि रजतत्वरजतत्वाभावविषयकः तत्र रजतत्वाभावाभाववति रजतत्वाभाववगाहित्वेन रजतत्वाभावांशे भ्रमत्वेपि रजतत्ववति रजतत्वावगाहित्वेन रजतत्वांशे प्रमैवेति समाधत्ते रजतत्वांशे प्रमैवेति । मूल इति । सप्तम्यर्थोऽवच्छेदकत्वं तथा च मूलावच्छेदेन कपिसंयोगीति प्रत्ययोपि प्रमास्यादित्यर्थः । न तथा न प्रमा । तस्य मूलस्य । तदनवच्छेदकत्वात् कपिसंयोगानवच्छेदकत्वात् । किञ्चानुभवत्वमित्यत्रोत्तरयति स्मृतीति । अनुमित्यादावनुभवत्वव्यवहारस्य स्मृतिभिन्नज्ञानत्वरूपोपाधिनैव निर्वाहात्साक्षात्कारत्वातिरिक्तानुभवत्वजातौ मानाभाव इति भावः । अथैवं यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरं । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्यादिवाक्यैः स्वर्गशाब्दबोधे जाते स्वर्गमनुभवामीति प्रत्ययापत्तिः । अनुभवामीति प्रतीत्या ऽनुभवत्वजातिकल्पने तु तदापत्तेर्दुर्वारत्वमिति । यदि च तादृशी प्रतीतिः प्रामाणिकी तदानुभवत्वजातिनिरसनं ब्रह्मणोप्यशक्यम् । एवं च विशिष्टानुभवम्प्रति विशेषणधियो हेतुत्वमिति शिरोमण्युक्तमपि सङ्गच्छते अत एवाह जातिविशेष इति । अथ वा विशेषणतावच्छेदकप्रकारकनिश्चयस्य कार्यतावच्छेदकं विशिष्टवैशिष्ट्यानुभवत्वमिति तत्कार्यतावच्छेदककोटिप्रविष्टत्वेनानुभवत्वजातिसिद्धिः । तथा हि । व्याप्तिज्ञानत्वादिनैवानुमित्यादिहेतुत्वनिर्वाहे विशेषणतावच्छेदकप्रकारकनिश्चयस्य कार्यतावच्छेदकं न विशिष्टवैशिष्ट्य-

प्रत्यक्षत्वं यत्र साध्यस्याप्रसिद्धिस्तत्रापि साध्यतावच्छेदकविशिष्टसाध्यप्रकारकविशिष्टवैशिष्ट्यबोधरूपानुमित्यापत्तेर्दुर्वारत्वात् । विशकलितपदार्थोपस्थितावपि विशिष्टवैशिष्ट्यशाब्दबोधस्य दुर्वारत्वाच्च । अस्मन्मते तु तादृशकार्यकारणभावानुरोधात्तादृशस्थले साध्यविशेष्यिकैवानुमितिस्तत्र पक्षतावच्छेदकविशिष्टपक्षनिश्चयस्य सत्वात्। न च तादृशनिश्चयस्य कार्यतावच्छेदककोटिनिविष्टं स्मृतिभिन्नज्ञानत्वमिति वाच्यम्। अनुभवामीति प्रतीत्याऽनुभवत्वजातिसिद्धौ स्मृतिभिन्नज्ञानत्वापेक्षया लाघवादनुभवत्वस्यैव कार्यतावच्छेदकत्वादित्यभिप्रायवानाह जातीति । बाधकं विनेति जातिबाधकं विनेत्यर्थः। अयं भावः । आकाशत्वं न जातिः व्यक्त्यभेदरूपबाधकात् । बुद्धित्वोपलब्धित्वादिकं ज्ञानत्वातिरिक्तं न जातिः । तुल्यत्वरूपबाधकात् । भूतत्वं न जातिः जातिसङ्कररूपबाधकात् । अत्रेदं बोध्यं । मूर्त्तत्वं क्रियासमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । न च भूतत्वेन साङ्कर्यमिति वाच्यम् । भूतत्वस्य बहिरिन्द्रियग्राह्यविशेषणवत्वरूपोपाधित्वात् । जात्योः सङ्करस्य दूषकत्वात् । अपकृष्टपरिमाणवत्वं मूर्त्तत्वमिति प्राचीनप्रवादमात्रं । न च क्रियासमवायिकारणतावच्छेदकं द्रव्यत्वमेवास्त्विति वाच्यम् । नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमाद्गगनादेरपि क्रियारूपफलावश्यम्भावापत्तेः । न च सहकारिविरहादेव फलाभाव इति वाच्यम् । सार्वत्रिकस्य गगनादेः कदाचित्सहकारिसमवधानसम्भवादिति । जातौ न जातिः । अनवस्थारूपबाधकात् । विशेषत्वं न जातिः सामान्यान्यत्वे सति सामान्यवद्भिन्नत्वे सति समवेतत्वरूपविशेषलक्षणव्याघातात् । तस्यैव नाम रूपहानिरिति वदन्ति । समवायो न जातिः समवाये समवायरूपसम्बन्धाभावात् । तदुक्तं व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रह इति ।

**करणत्वञ्च व्यापारवदसाधारणकारणत्वं घटंप्रतिकपालसंयोगवारणाय व्यापारवदिति ईश्वरज्ञानवारणायासाधारणेति। नन्वेवं ज्ञानं त्वत्माऽपिकरणं**

स्यात् आत्ममनःसंयोगस्य व्यापारस्य सत्वात् तज्ज-न्यत्वे सति तज्जन्यजनको व्यापारः। भवति चात्मसंयोग आत्मजन्य आत्मजन्यज्ञानजनकश्चेति चेत्स्यादेव उपाधीनां करणत्वादीनां भेदाच्च व्यवहारभेदः। अत एव "विवक्षातः कारकविभक्तयो नानाभवन्तीति" शाब्दिकाः। अत एवात्मानमात्मना वेत्मीति तृतीया। शिवादित्यमिश्रास्तु करणाद्याकारानुगतमतेः करण-त्वादिकमखण्डोपाधिरूपसामान्यमङ्गीचक्रुः। तच्च प्र-माणं चतुर्विधमित्याह भगवान्सूत्रकारः "प्रत्यक्षानु-मानोपमानशब्दाः प्रमाणानीति" तत्र साक्षात्कारक-पप्रमाकरणं प्रत्यक्षं साक्षात्कारत्वं च साक्षात्करो-मीत्यनुभवसाक्षिको जातिविशेषः॥

प्रमाकरणं प्रमाणमित्यत्र प्रमात्वमुक्त्वा करणत्वमाह कारण-मिति। व्यापारवदिति। असाधारणे कारणे चक्षुरिन्द्रियादौ चक्षुःसंयो-गादिरूपव्यापारस्य सत्वाद्भवत्येव तत्र करणत्वम्। घट प्रति कपालसंयोग-स्यासाधारणकारणत्वेऽपि न तस्य करणत्वं व्यापाराभावादित्यर्थः। ईश्वरेति। ईश्वरज्ञानस्य कार्यमात्रजनकत्वाद्भ्रम्यादिजनकत्वाद्व्यापारव-त्वेपि न करणत्वं तस्य साधारणत्वादित्यर्थः। एवं मनाद्यकारणत्वनि-र्वचने। आत्ममनइति। यथात्ममनःसंयोगाश्रयत्वेन मनसः करणत्वं तथा तत्संयोगाश्रयत्वेनात्मनोऽपि करणत्वं स्यादित्यर्थः। ननु कथमात्ममनःसंयोगस्य व्यापारत्वमतो व्यापारलक्षणमाह तज्जन्यत्वइति। तत्रेष्टापत्तिं करोति स्यादेवेति। नन्वेवं कर्तृकरणयोरैक्यात्कथं भेदव्यवहार इत्यत आह उपाधीनामिति। तथा च कर्तृत्वकरणत्वयोर्भेदात्कर्तृकरणयोर्भेदव्यव-हार इत्यर्थः। आदिना कर्मत्वसंग्रहः। अत एव उपाधीनां भेदादेव-

हारभेदादेव । यद्वा अत एव आत्मनि करणत्वस्वीकारादेव । विवक्षात इति । यदैवास्य कर्मत्वविवक्षा तदा द्वितीया यदा च कर्तृत्वकरणत्वविवक्षा तदा तृतीया तच्च कर्तृत्वकरणत्वयोरेकत्रसत्त्व एव सम्भवतीत्यर्थः । तत्र सम्मतिमाह । अत एवेति । अत एव विवक्षातः कारकविभक्तीनां नानात्वादेव । अखण्डोपाधीति । तथा च ज्ञानं प्रति मनःकरणं नात्मा तत्रकरणत्वरूपाखण्डोपाधेरभावादित्यर्थः । अस्वीचक्रुरित्यस्वरसोद्भावनम् । तद्बीजञ्च । आत्मनि करणत्वाभावे आत्मनेति करणत्वार्थकतृतीयानुपपत्तिः । करणत्वकर्मत्वकर्तृत्वादीनां परस्परविरोधे आत्मना ऽऽत्मानं वेत्सीत्यत्र द्वितीयानुपपत्तिश्चेति । तत्र चतुर्विधप्रमाणमध्ये । साक्षात्कार इति । अयं घट इत्यादिसाक्षात्काररूपा या प्रमा तत्करणं चक्षुरिन्द्रियादिः तत्प्रत्यक्षप्रमाणमित्यर्थः । अनुमानादावतिव्याप्तिवारणाय साक्षात्कार इति प्रत्यक्षलक्षणघटितं साक्षात्कारत्वं सयुक्तिकं निर्वक्ति साक्षात्कारत्वमिति ।

**न चेयमिन्द्रियजन्यज्ञानत्वविषया । ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यत्वात् । इन्द्रियाप्रतीतावपि तथा प्रतीतेश्च ।**

नन्विन्द्रियजन्यज्ञानत्व साक्षात्कारत्वमिति साक्षात्करोमीति प्रतीतिरिन्द्रियजन्यज्ञानत्वविषया भविष्यतीति किमतिरिक्तजातिकल्पनेनेत्याह नचेति । एवं चेन्द्रियजन्यज्ञानं प्रत्यक्षमिति फलितम् । ईश्वरज्ञानस्यालक्ष्यत्वान्नाव्याप्ति"रिन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिसूत्रे" जन्यप्रत्यक्षस्यैव विवक्षितत्वात् । इयं साक्षात्करोमीति प्रतीतिः । ज्ञानमात्रस्येति । मनोरूपेन्द्रियजन्यज्ञानत्वस्यानुमित्यादावपि सत्वेन तत्रातिप्रसङ्गादित्यर्थः । ननु मनसः क्षित्यादिचतुष्टयातिरिक्त द्रव्यत्वेमानाभावः भौतिकपरमाणुस्वरूपस्य त्रुटिस्वरूपस्य वा मनस्त्वात् । नचाणुमात्रस्य मनस्त्वाच्चक्षुरणुसंयोगकाले रसानाणुसंयोगस्यापि सत्वेन युगपज्ज्ञानाज्ञानोत्पत्तिरिति वाच्यम् । तत्र यथा रसनमनःसंयोगदशायां ज्ञानमात्रजनकत्वङ्मनः संयोगस्य सत्वेऽपि

न रासनस्पार्शनयोर्यौगपद्यं किंत्वदृष्टविशेषवशादेकमेव तथा ममापीति ज्ञानमात्रस्य मनोजन्यत्वमित्यतो दूषणान्तरमाह इन्द्रियाप्रतीताविति । यद्वा नन्विन्द्रियत्वेनेन्द्रियजन्यज्ञानत्वविषया । नचेन्द्रियत्वं साक्षात्कारकरणत्वं साक्षात्कारत्वं चेन्द्रियजन्यज्ञानत्वमित्यन्योन्याश्रय इति वाच्यम् । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वस्येन्द्रियत्वात् । आत्मन्यतिव्याप्तिवारणाय विशेषगुणानाश्रयत्वे सतीति । काले ऽतिव्याप्तिवारणाय ज्ञानकारणेति । चक्षुरादावव्याप्तिवारणायोद्भूतेति । उद्भूतत्वं चानुद्भूतत्वरूपजात्यभावः । श्रोत्रे ऽव्याप्तिवारणाय शब्देतरेति । परिमाणग्रहे इन्द्रियावयवावयवसंयोगस्य हेतुत्वात्तद्वतीन्द्रियावयवे ऽतिव्याप्तिवारणाय मनः पदं । तथा च ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यत्वं नेन्द्रियत्वेन किंतु मनस्त्वेनेत्यतोदूषणान्तरमाह इन्द्रियाप्रतीतावपि तथेति । अत्र जन्यज्ञानत्वावच्छिन्नं प्रत्यात्मत्वेनैवकारणत्वम् । न चात्मनो व्यापकत्वाद्युगपज्ज्ञानाज्ज्ञानोत्पत्तिरिति वाच्यम् । अदृष्टवदात्मप्राणयोर्विजातीयसंयोगस्यापि हेतुत्वात्तथा चानुमित्यादौ मनोरूपेन्द्रियजन्यत्वाभावान्न दोष इति ध्येयम् । इन्द्रियजन्यज्ञानत्वघटकीभूतस्येन्द्रियस्याज्ञानेपि साक्षात्करोमीतिप्रतीतेः सत्वात् इन्द्रियजन्यज्ञानत्वं न साक्षात्करोमीति प्रतीतेर्विषय इत्यर्थः । तथा प्रतीतेश्च । साक्षात्करोमीति प्रतीतेश्च ।

**नापि चाक्षुषत्वादिजातिविषया अननुगतत्वात् । यद्वाजन्यधीजन्यमात्रवृत्तिजातिशून्यत्वं तत् । भवति ह्रिजन्यधीजन्यमात्रवृत्त्यनुमितित्वादि तच्छून्यत्वंसाक्षात्कारमात्रे ।**

ननु मास्त्वियं प्रतीतिरिन्द्रियजन्यज्ञानत्वविषया चाक्षुषत्वादिविषया तु भविष्यत्येवेत्यत आह नापीति । अननुगमादिति । प्रतीतिविषयोऽप्येकोऽनुगतो धर्मो वाच्यः । चाक्षुषत्वस्पार्शनत्वादीनां नानात्वान्नानुगतत्वमित्यर्थः । नन्वेतत्प्रतीतिविषयभूतसाक्षात्कारत्वं न जातिः किं तु ज्ञानाकरणं ज्ञानं प्रत्यक्षमित्येतत्पर्यवसितार्थकं जन्यधीजन्यमात्रवृत्तिजा-

तिशून्यज्ञानत्वरूपमभिप्रेत्येवेत्यभिप्रायवानाह यद्वेति । अथचेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति सूत्रं । तत्र ज्ञानान्तमेकं लक्षणं । अव्यपदेश्यादिसंपूर्णमपरं । व्यपदेशःशब्दस्तज्जन्यं व्यपदेश्यं शाब्दज्ञानन्तद्भिन्नं तेन शाब्दबोधनिरासः । अव्यभिचारीत्यस्याव्यभिचारितत्वधीजन्यमात्रवृत्तिजातिरहितमित्यर्थस्तेनानुमितिनिरासः । विगतोवसायः सादृश्यज्ञानं इत्यस्यापि सादृश्यज्ञानजन्यभिन्नत्वमित्यर्थस्तेनोपमितिनिरासः । तथाचेन्द्रियार्थसन्निकर्षोत्पन्नमित्यस्य तात्पर्यार्थकमिन्द्रियजन्यज्ञानत्वमिति लक्षणं तत्तु ज्ञानमात्रस्येत्यादिदोषदुष्टमतोऽव्यपदेश्यमव्यभिचारिवयवसायात्मकमित्यस्य निष्कृष्टलक्षणमाह । जन्येत्यादि । तथा च साक्षात्कारत्वपदवाच्यमपीदमेवेति भावः । तत् साक्षात्कारमात्र इत्याह भवतिहीत्यनेन । ईश्वरधीजन्यत्वमावृत्तिजन्यज्ञानत्वस्य जन्यानुभवत्वस्य चाक्षुषत्वस्य वा साक्षात्कारे सत्त्वादसम्भववारणाय प्रथमजन्यपदं । चाक्षुषत्वादिकमादायासम्भववारणाय द्वितीयजन्यपदं सत्तागुणत्वज्ञानत्वमादायासम्भववारणाय मात्रपदं तादृशधर्मशून्यत्वेन निर्वाहेपि जातिपदं समवायेन वृत्तिलाभाय अन्यथा साक्षात्कारेपि कालिकसम्बन्धेनानुमितित्वादेः सत्त्वादसम्भवापत्तेः । सामान्यादावतिव्याप्तिवारणाय ज्ञानत्वमिति ।

न च निदध्यासनजन्यमात्रवृत्तिमोक्षजनकतावच्छेदकजातिमति तत्वसाक्षात्कारे ऽव्याप्तिः । मानसावृत्तित्वेन जातेर्विशेषणीयत्वात् । मानसत्वञ्च जातिविशेष इत्यास्तां विस्तरः । नास्तिकास्तु वैशिष्ट्यानवगाहिज्ञानं साक्षात्कारः । अयं घट इत्यादि ज्ञाने च साक्षात्कारत्वप्रत्ययो भ्रान्तिः घटत्वाद्यलीकविषयत्वादित्याहुस्तन्न । बाधकं विना भ्रान्तित्वायोगात् । न चालीकविषयत्वं बाधकं घटत्वा-

देरलीकत्वासिद्धेः । स च साक्षात्कारो द्विविधो नित्योऽनित्यश्च नित्यो भागवतः अनित्योऽन्यः । अनित्यो द्विविधो निर्विकल्पकं सविकल्पकञ्च तत्र वैशिष्ट्यानवगाहिज्ञानं निर्विकल्पकं निःप्रकारकं वा तच्च यद्यपि न प्रत्यक्षसिद्धमतीन्द्रियत्वाभ्युपगमात् ।

निदिध्यासनेति । निदिध्यासनं विषयान्तरसंचाररहितात्मविषयकं विच्छेदशून्यतत्वज्ञानं तस्य मनोजन्यत्वेनानुमित्यादेर्मानसत्वान्मानसावृत्तिजातिशून्यत्वमसम्भवीत्यत आह मानसत्वमिति । तथा च मानसत्वं यदि जातिस्तदानुमित्यादिव्यावृत्तैव । यदि चोपाधिस्तदामनोमात्रजन्यप्रत्यक्षत्वमेव मानसत्वमिति नोक्तदोष इति संक्षेपः । वैशिष्ट्यानवगाहिज्ञानं सम्बन्धानवगाहिज्ञानं । नन्वयं घट इत्यादिज्ञाने घटघटत्वयोः सम्बन्धावगाहनात्साक्षात्कारत्वं न स्यात् । न चेष्टापत्तिः । घटं साक्षात्करोमीतिप्रतीतिविरोधादित्यत आह अयं घट इति । कुत इत्याह घटत्वेति । अनुगतधर्मोऽलीकः घटाद्यनुगतप्रत्ययस्य चाघटभिन्न इत्येवं क्रमेणनिर्वाहः तथा चालीकविषयकबुद्धेर्भ्रमत्वमित्यर्थः । बाधकं विना विषयबाधकमन्तरेण लघुघटत्वादेर्विषयस्यालीकत्वाद्विषयबाधोऽस्त्येवेत्याह न चेति । घटत्वादेः प्रत्यक्षसिद्धत्वेनालीकत्वासिद्धेरित्यर्थः । अन्यः । अस्मदीयः । तत्र नित्यानित्योभयविधसाक्षात्कारे । वैशिष्ट्येति वैशिष्ट्यं सम्बन्धस्तथा च घटघटत्वयोः सम्बन्धानवगाहिज्ञानं निर्विकल्पकमिति फलितम् । तत्र सांसर्गिकविषयताशून्यमिति निर्गलितार्थो बोध्यः । एवं सांसर्गिकविषयतावत्प्रकारताख्यविषयताया अप्यभावात्तद्विषयत्वशून्यमिति निर्गलितार्थकलक्षणान्तरमाह निराकारेति निष्प्रकारकमित्यर्थः । प्रकारताख्यविषयताशून्यमिति निर्गलितार्थः ।

अथ विशेष्यताख्यप्रकारताख्यसांसर्गिकविषयताशालिज्ञानस्य प्रत्यक्षत्वसम्भवान्निर्विकल्पके प्रत्यक्षप्रमाणाभावं दर्शयति तच्चेति तं च

निर्विकल्पकं चेत्यर्थः। तादृशविषयितात्रयशून्यज्ञानत्वस्य मानसत्वावच्छिन्नं प्रति प्रतिबन्धकत्वादप्रत्यक्षमिति भावः। ननु मानसत्वावच्छिन्नं प्रति तादृशविषयतात्रयशून्यत्वस्य प्रतिबन्धकत्वापेक्षया लाघवात्तस्यैन्द्रियत्वमेवोच्यताम्। न च तस्यैन्द्रियत्वेऽनुव्यवसायापत्तिः प्रथमं यत्र निर्विकल्पकं ततो विशिष्टबुद्धिस्ततस्तदनुव्यवसायस्तत्र विशिष्टबुद्धिरूपव्यवसायवन्निर्विकल्पकमानस्येष्टत्वात्। न च व्यवसायाविषयको निर्विकल्पकमात्रविषयको ऽनुव्यवसायः कुतोनेति वाच्यम्। विषयवैशिष्ट्याविषयकज्ञानादिविषयकप्रत्यक्षस्य शशशृङ्गायमाणत्वेन निर्विकल्पमात्रविषयकप्रत्यक्षापादनस्याशक्यत्वात्। न च निर्विकल्पकोपनीतविषयो ऽनुव्यवसाये भासतामिति वाच्यम्। निर्विकल्पकस्य प्रत्यासत्तित्वाभावात्। किञ्च जात्यतिरिक्तपदार्थस्य स्वरूपतोभानासम्भवेन शुद्धघटस्य प्रकारतयाभानानुपपत्तेः। अनुव्यवसायेत्वात्मनि ज्ञानं ज्ञाने घटो घटेच घटत्वं प्रकारो घटमहं जानामीत्यनुव्यवसायात्। तथा च विशेषणतावच्छेदकप्रकारकनिश्चयाभावादनुव्यवसायरूपोविशिष्टवैशिष्ट्यबोधोनेतस्मान्निर्विकल्पके कथमतीन्द्रियत्वमिति चेत्। उच्यते। तादात्म्यसम्बन्धेन गुरुत्वादिव्यक्तिवत्तेन सम्बन्धेन निर्विकल्पकव्यक्तेरपि विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वात् न तस्यैन्द्रियत्वं प्रामाणिकगौरवस्य दूषकत्वाभावाद्वा। विशेष्यताख्यादिविषयितात्रयशालिज्ञानस्य मानसत्वावच्छिन्नं प्रति कारणत्वात्तादृशविषयताशून्यत्वस्य प्रतिबन्धकत्वाद्वा वैशिष्ट्यनवगाहिज्ञानस्य प्रत्यक्षत्वाभावान्निर्विकल्पकस्यातीन्द्रियत्वमिति संक्षेपः।

**तथाप्ययं घट इति विशिष्टज्ञानरूपकार्यानुमेयम्। तथा हि जन्यविशिष्टज्ञानं प्रति जन्यतद्विशेषणज्ञानं कारणमिति निर्विवादम्। भवति हि प्राथमिकमस्माकमयं घट इति ज्ञानजन्यं घटत्वविशिष्टज्ञानमतस्तत्रापि घटत्वज्ञानं कारणम्। न च तदानीं घटघटत्वविशिष्टज्ञानमस्ति विशेषणीभूतघटत्वस्याज्ञानात्।**

निर्विकल्पके प्रत्यक्षप्रमाणाभावेपि अनुमानरूपप्रमाणमस्त्येवेत्याह तथापीति । कार्येति । विशेषणज्ञानरूपकारणं विना विशिष्टज्ञानरूपकार्यस्यासम्भवादित्यर्थः । जन्यतद्विशिष्टज्ञानं जन्यघटत्वादिविशिष्टज्ञानं । तद्विशेषणज्ञानं घटत्वादिरूपविशेषणज्ञानं । ईश्वरज्ञाने व्यभिचारवारणाय जन्येति । द्वितीयादिज्ञाने विशिष्टज्ञानात्मकस्य पूर्वानुभवरूपस्य स्मरणरूपस्य वा विशेषणज्ञानस्य सम्भवात् प्राथमिकमुक्तं । तत्रापि प्राथमिकघटत्वादिविशिष्टज्ञाने पि । अयं घट इत्यादिविशिष्टज्ञानं विशेषणज्ञानजन्यं जन्यविशिष्टबुद्धित्वात् दण्डीपुरुष इति विशिष्टवदित्यनुमानं सूचितम् । ननु तत्र विशिष्टज्ञानं विशेषणज्ञानं भविष्यतीत्यत आह । न चेति । तदानीम्प्राथमिकविशिष्टज्ञानोत्पत्तिपूर्वदशायां कुतो नेत्यत आह विशेषणीभूतेति । तथा च । प्राथमिकघटत्वविशिष्टज्ञानात्पूर्वं तादृशज्ञानान्तरस्यासत्वादित्यर्थः ।

**ततो वैशिष्ट्यानवगाह्येव तद्बाच्यन्तदेव च निर्विकल्पकं । न च जन्मान्तरीयघटत्वविशिष्टज्ञानन्तत्र कारणं अव्यहितपूर्वकालवर्त्तिन एव विशेषणज्ञानस्य तत्र हेतुत्वात् । न च भागवतं घटत्वज्ञानन्तज्जनकं सामानाधिकरण्यप्रत्यासत्या तस्य हेतुत्वात् । भगवज्ज्ञानस्य व्यधिकरणत्वात् । नन्वस्तु घटत्वविशिष्टस्मरणमेव तत्र कारणं । न च विशेषणज्ञानं विना तदेव विशिष्टज्ञानं कथमिति वाच्यम् । विशिष्टानुभवे हि विशेषणज्ञानं कारणं न तु स्मरणे ऽपि तेन विना तदुत्पत्तेः अन्यथा ऽनवस्थानात् । अस्तु वा निर्विकल्पकं घटत्वस्मरणमिति चेन्न । चैत्रत्वादिविशिष्टबुद्धौ तदसम्भवात् न हि चैत्रत्वादिकं पूर्वमनु-**

ूतं यतः स्मरेत् न चानुभवं विनैव स्मरणं। तस्य तद्धेतु-
वात्।

तत् विशेषणज्ञानं। तदेव वैशिष्ट्यानवगाहिविशेषणज्ञानमेव। तत्र
ाथमिकवैशिष्ट्यबोधे । तज्जनकं विशिष्टधीजनकं । प्रत्यासत्त्या
ान्धेन। तस्य विशेषणज्ञानस्य सामानाधिकरण्यप्रत्यासत्त्या ऽव्यव-
ातपूर्ववर्त्तिकारणं दर्शयितुं शङ्कते नन्विति। तदेव घटत्वविशिष्ट-
ारणमेव। तेन विनापि विशेषणज्ञानेन विनापि। उपपत्तेः विशिष्ट-
ारणोपपत्तेः। अन्यथा स्मरणं प्रत्यपि विशेषणज्ञानस्य हेतुत्वे ऽनव-
ानादिति स्मरणकारणीभूतमपि विशेषणज्ञानं विशिष्टज्ञानात्मकं तत्रा-
विशिष्टज्ञानात्मकं विशेषणज्ञानं कारणमिति क्रमेणानवस्थेत्यर्थः। ननु
दं विशेषणज्ञानस्य कार्यतावच्छेदकं विशिष्टानुभवत्वं। तदानुभवत्व-
तिकल्पने गौरवमित्यत आह अस्तु वेति। तथा च प्राथमिकमयं घट-
न विशिष्टज्ञानकारणीभूतघटत्वस्मरणं नानुपपन्नमिति भावः। ननु
नस्मरणयोः समानविशेष्यकत्वेन समानप्रकारकत्वेनैव कार्यकारणभा
न्निर्विकल्पकस्मरणोपपत्तिरिति। न च घटान्याविशेष्यकघटत्वान्या-
ारकस्मृतित्वेन कार्यता। घटत्वप्रकारकघटविशेषकनिश्चयत्वेन कार-
ति वाच्यम्। गौरवादित्ययं घट इदं द्रव्यमिति संस्काराभ्यां सोयं घटो-
यमिति स्मृतिर्न स्यादिति चेत्। समानप्रकारकत्वेन समानविशेष्यक-
न ज्ञानसंस्कारयोः संस्कारस्मृत्योश्च कार्यकारणभावेनैवेकतरप्रकारकै-
ारविशेष्यकज्ञानाच्चापरप्रकारकापरविशेष्यकस्मरणमिति ज्ञानस्मरणयो-
नत्वस्मृतित्वाभ्यामेव सामान्यतः कार्यकारणभावसंभवात्। एवं च
ं न विशिष्टस्मरणं विशेषणज्ञानकारणाभावात् किन्तु सामान्यसाम-
येर्निर्विकल्पकस्मरणमेव। न चैवं चैत्रविषयकनिश्चयान्मैत्रनिर्विकल्पकं
दिति वाच्यं। मैत्रस्मरणगोचरोद्बोधकाभावादिति। अत एव प्रमेय-
प्रकारकानुभवाद्विशेषरूपेण घटत्वपटत्वादिविशेषणज्ञानाभावकालेऽपि
र्त्यापत्तिः। ज्ञानत्वेन स्मृतित्वेन कार्यकारणभाव इत्युक्तत्वेन सर्वासां

प्रकारतासत्त्वे घटघटत्वयोर्ज्ञाने किं बाधकमित्यखण्डलार्थः। ननु तथापि कथमभिमतनिर्विकल्पकसिद्धिरित्यत आह तदेवेति। ननु न विशेषणज्ञानत्वेन हेतुत्वं किन्तु विशेषणविषयकत्वेन। तथा च विशेषणज्ञानं विनापि विशेषणविषयकसंस्कारादित एव विशिष्टस्मरणादिसम्भवाचानुपपत्तिलेशोपीत्यभिप्रायवानाह नन्विति। विशेषणज्ञानस्येति विशेषणज्ञानत्वेन विशेषणज्ञानस्य न हेतुत्वमित्यर्थः। विशेषणविषयकत्वस्य संस्कारसाधारणकारणस्य विशेषणज्ञानेपिसत्त्वात्। यद्वा विशेषणज्ञानस्यापि कार्यतावच्छेदकं जन्यविशिष्टप्रत्यक्षत्वं न तु विशिष्टज्ञानत्वं। अनुमित्युपमितिशाब्दबोधानां तद्व्यापारसम्बन्धेन व्याप्तिसादृश्यपदज्ञानैरेव निर्वाहसम्भवात्। तथा च तादृशप्रत्यक्षत्वं सन्निकर्षस्येव कार्यतावच्छेदकमस्तु किं विशेषणज्ञानस्य हेतुत्वकल्पनेनेत्यभिप्रायवानाह नन्विति। एतदेवं विशेषणज्ञानस्य व्यभिचारवारणोपयोगितर्कचिन्तनम्। तदवधारणात्, विशेषणज्ञानस्य हेतुतावधारणात्, ॥

## विस्तरस्तु मणिमरीचावनुसंधेयः।

विस्तरस्त्विति। अयं भावः। कदाचिज्जातिमानिति विलक्षणविशिष्टबोधः कदाचिद्घट इति विलक्षणविशिष्टबोधस्तत्र नियामकमवश्यं वाच्यमिति जातित्वविशिष्टबुद्धौ विलक्षणविषयताशालिजातित्वज्ञानस्य घटत्वविशिष्टबुद्धौ तु निर्विकल्पकसाधारणविषयताशालिघटत्वज्ञानस्य हेतुत्वमिति सिद्धं विशेषणज्ञानस्य हेतुत्वमिति। न च तथापि जातिमान्घट इति ज्ञानमनुपपन्नं तत्र घटत्वोपरि जातित्वभासकसामग्रीविरहादिति वाच्यम्। तज्ज्ञानस्यार्थसमाजसिद्धत्वात्। ननु जातिमान् जातित्वविशिष्टवानित्यनयोर्वैलक्षण्यं दुर्लभम्। न च जातिमानित्यत्र जातित्वोपरि न कस्यापि प्रकारत्वं जातित्वविशिष्टवानित्यत्र तु जातित्वस्योपरि जातित्वत्वस्य भानात्तद्वैलक्षण्यमिति वाच्यम्। जात्यतिरिक्तपदार्थानां स्वरूपतः प्रकारत्वाभावेन जातिमानित्यत्रापि जातित्वोपरि कस्यचिद्धर्मस्य प्रकारत्वावश्यकत्वेन साम्यादिति चेन्न। जाति-

स्वनिविशिष्टज्ञानं भिन्नं इति । सविकल्पकलक्षणघटिकां प्रकारतां निर्वक्ति प्रकारता चेति । या घटत्वादिनिष्ठप्रकारता सा ज्ञाननिष्ठा प्रकारिता । ज्ञान इति सप्तम्यर्थो विषयत्वं । घटत्वादेरिति षष्ठ्यर्थो निरूपितत्वम् । विषयतेति । ज्ञाननिष्ठा या प्रकारिता सैव विषयितेत्युच्यते । तथा च घटज्ञानविषयघटत्वादिनिरूपितविषयिताविशेषः प्रकारितेत्यर्थः । यदा सप्तम्यर्थो न विषयत्वं तदा ज्ञान इत्यस्य तादृशविषयतेत्यनेनान्वय इति । स्वरूपसम्बन्धस्यातिरिक्तत्वमभिप्रेत्याह पदार्थान्तरमिति । गौरवमेवात्रास्व-रसबीजम् । कश्चिद प्रतिभाति । विशेषणोपलक्षणभेदेन प्रकारता द्विवि-धा । तत्र विद्यमानं व्यावर्त्तकं सद्विशेषणं अविद्यमानमपि व्यावर्त्तकं सदु-पलक्षणं तदत्रासङ्गतं । तथा हि । काकवन्तो देवदत्तगृहाः । जटाभि-स्तापस इत्यादौ भवनोपरि भ्रमत्काकस्य शिरसि जटायाश्च विद्यमान-त्वेऽपि विशेषणत्वाभावादिति चेद्दण्डीकुण्डलीवासस्वी देवदत्त इत्यादौ दण्डादिमति अदण्ड्यादिव्यावृत्तिबुद्ध्या इत्यदण्ड्यादिव्यावर्त्तकतावच्छे-दक दण्डादिकमिति तद्विशेषणं । न च पुरुषत्वमेवास्त्विति वाच्यम् । अदण्डिसाधारणत्वात् । काकजटादिकं न गृहतापसादिविशेषणं तद-भाववत्यपि गृहतापसादिना व्यावृत्तिदर्शनात् । तस्माद्व्यावृत्त्यधिकरणताव-च्छेदकत्वमिति व्यावृत्तिजनकं विशेषणं अवच्छेदकत्वं चान्यूनानतिरिक्त-वृत्तित्वम् । व्यावृत्त्यधिकरणतानवच्छेदकत्वे सति व्यावृत्तिजनकमुपलक्षणं । उपलक्षणस्य व्यावृत्त्यधिकरणतावच्छेदकत्वाभावादिति संक्षेपः ।

**भट्टास्तु ज्ञातो घट इति प्रतीतेर्ज्ञानजन्यो विषयनिष्ठः प्राकट्यापरनामा पदार्थो ज्ञातता सैव च विषयता घटज्ञानयोः सम्बन्धस्वरूपा । युक्तञ्चैतत्कथमन्यथा ज्ञानकर्मत्वं घटादेः क्रियाजन्यफलशालित्वाभावादित्याहुस्तन्न । विनष्टे घटे ज्ञात इति प्रतीतेः । न हि तत्र ज्ञानं किञ्चिज्जनयितुं शक्नोति तस्यै-**

वासत्वात् । न च समवायिकारणं विना भावकार्योत्पत्तिः संभवति । तत्र स्वरूपसम्बन्धविशेष एव प्रतीतेर्विषय इति चेदन्यत्रापि स एवास्तु कृतमधिकेन कर्मविभक्तेरपि तद्वदेवोपपत्तेरिति संक्षेपः । अन्ये तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं अयं घट इत्यत्र हि घटत्वस्य वैशिष्ट्यं भासते तत्प्रतियोगि घटत्वमित्याहुः ।

ज्ञानमात्रस्यातीन्द्रियत्वादतीन्द्रियेण ज्ञानेन विषये घटादौ ज्ञातता जन्यते । तथा च ज्ञानमनुमीयत इत्याद्यभिप्रायवता नामपूर्वकं मतमाह भट्टास्त्विति । ज्ञाततायां मानमाह ज्ञात इति । अन्यथा, ज्ञाततायाः अनङ्गीकारे, । ज्ञानकर्मत्वं, घटमहं जानामि ज्ञातो घट इत्यादि ज्ञानकर्मत्वम्, । कथन्तायां हेतुमाह क्रियेति । धात्वर्थः क्रिया तथा च ज्ञाततायाः ज्ञानजन्यत्वाभावे ज्ञानरूपक्रियाजन्यफलस्य घटादावसत्वादित्यर्थः । तस्यैव, घटस्यैव, । ननु विनापि घटं ज्ञातताजनने किं बाधकमत आह न चेति । भावकार्यस्य समवायिकारणकत्वनियमादित्यर्थः । ध्वंसरूपकार्यस्य समवायिकारणकत्वाभावाद्भावेत्युक्तम् । तत्र, नष्टघटस्थले, प्रतीतेः, ज्ञातो घट इति प्रतीतेः, । अन्यत्रापि, वर्तमानघटादिस्थलेपि, । स एव स्वरूपसम्बन्ध एव । कृतमिति । तथा चातिरिक्तज्ञाततायाः मानाभावादिति भावः । ननु तर्हि घटमहं जानामीति ज्ञानकर्मत्वं घटस्य कथं भविष्यतीत्यत आह कर्मविभक्तेरपीति । तद्वदेव, ज्ञातो घट इति प्रतीतिवदेव, । तथा च यथा ज्ञातो घट इति प्रतीतिविषयः स्वरूपसम्बन्धविशेषस्तथा द्वितीयार्थोपीत्यर्थः । एवं च स्वरूपसम्बन्धरूपविषयत्वं द्वितीयार्थ इति । घटं जानामीत्यत्र घटविषयकज्ञानवानिति बोधः । इयान् परं भेदः स्वरूपसम्बन्धे ज्ञातोघट इति प्रतीतिविषयत्वं शक्त्या, द्वितीयार्थत्वं लक्षणयेति । न चैवं द्वितीयार्थस्वरूपसम्बन्धे ज्ञातो

घट इति प्रतीतिविषयत्वं लक्षणया शक्त्या तु ज्ञाततायामिति ज्ञात-तासिद्धिर्दुर्वारेति वाच्यम् । स्वरूपसम्बन्धेनैवोपपत्तावतिरिक्तज्ञाततायां प्रमाणाभावात् । न च शक्त्या द्वितीयार्थोऽपि स्वरूपसम्बन्ध एवास्त्विति वाच्यम् कर्मणि द्वितीयेति सूत्रानुरोधात्कर्मत्व एव शक्तेः कल्पनात् । ननु सुब्विभक्तौ न लक्षणा अन्यथा व्यत्ययानुशासनवैयर्थ्यात् । तथा च द्वितीयायाः कथं स्वरूपसम्बन्धे लक्षणेति चेन्न । सुब्विभक्तौ न लक्षणेत्यस्य विभक्तिनिरूपिता विभक्त्यन्तरार्थे न लक्षणेत्यादिरूपः संक्षेपार्थो बोध्य इति । अन्येत्त्विति । अत्र प्रतियोगित्वं निरूपकत्वम् । एवं भासमानवैशिष्ट्यानुयोगित्वं विशेष्यत्वमित्यपि बोध्यं विशिष्टज्ञाने प्रतियोगित्वमनुयोगित्वं च समूहालम्बनादधिकं भासत इति तयोर्वैलक्षण्यमिति ।

**तन्न दण्डपुरुषसंयोगा इति समूहालम्बने दण्डीपुरुष इति वद्दण्डस्य प्रकारतापत्तेः संयोगो हि दण्डस्य वैशिष्ट्यं भासते तत्प्रतियोगी च दण्ड इति दिक् । तच्च प्रत्यक्षमिन्द्रियात्मकं द्वेधा द्रव्यग्राहकं तदग्राहकं च । द्रव्यग्राहकाणि चक्षुस्त्वङ्मनांसि । अन्यद्घ्राणं रसनं श्रवणञ्च । ननु मनसो द्रव्यग्राहकत्वेऽन्धस्यापि विप्रकृष्टघटोपलब्ध्यापत्तिः ।**

तन्मतं दूषयति तन्नेति दण्डपुरुषसंयोगा इति समूहालम्बने एते त्रय एव बुध्यन्ते दण्डीपुरुष इत्यत्रापि त एवेति समूहालम्बनविशिष्टज्ञानयोर्भेदो न स्यादिति भावः । तदेवाह संयोग इति । दिगिति । ननु दण्डीपुरुष इत्यत्र प्रतियोगित्वमनुयोगित्वं चातिरिक्तं बुध्यते दण्डपुरुषसंयोगा इत्यत्र तु त्रय एव बुध्यन्ते इति कुतो न वैलक्षण्यमिति चेन्न । दण्डपुरुषसंयोगप्रतियोगित्वानुयोगित्वानीति समूहालम्बनस्य दण्डीपुरुष इति विशिष्टज्ञानस्य च भेदो न स्यात् । न च तत्र प्रतियोगित्वानुयोगित्वयोरपि सम्बन्धो बुध्यत इति वाच्यम् विषयानवस्थापत्तेरिति । अथ

विषयताविशेषरूपप्रकारता ऽपि दण्ड कुतो नेति चेन्न । समूहालम्बनविषयीभूतस्य दण्डस्यास्मदभिमतविलक्षणप्रकारताया अभावात् तथा हि समूहालम्बने सर्वं स्वातन्त्र्येण भासन्ते न तु तत्र दण्डादेः प्रकारतया संयोगादेः संबन्धतया पुरुषादेर्विशेष्यतया भानं । दण्डीपुरुष इत्यत्र तु दण्डस्य प्रकारतया संयोगस्य संसर्गतया पुरुषस्य विशेष्यतया भानमिति । दण्डादौ प्रकारताख्यविषयतायाः संयोगादौ सांसर्गिकविषयतायाः पुरुषादौ विशेष्यताख्यविषयतायाश्च सत्वात्तयोर्भेद इति । अथ फलात्मकं प्रत्यक्षमुक्त्वा करणात्मकं प्रत्यक्षमाह तच्चेति । तच्च साक्षात्कारिप्रमाकरणं च । इन्द्रियत्वं चेन्द्रियमिति परिभाषाविशेषविशेषयत्वम् । घ्राणादिषट्कान्यतमत्व वा । साक्षात्कारत्वव्याप्यजातिमात्रावच्छिन्नकार्यताप्रतियोगिककारणतावत्वे सति द्रव्यत्ववत्व वा । स्मृतिस्वरूपायोग्यत्व सति ज्ञानजनकमनः संयोगाश्रयत्व वेति। भवति च साक्षात्कारत्वव्याप्याजातिश्चाक्षुषत्वादीत्येवं लक्षणसमन्वयः । द्रव्यत्वपदमात्ममनःसंयोगवारणाय मात्रपदं शरीरादिवारणाय । एवमन्तिमे ज्ञानजनकात्ममनः संयोगश्चक्षुरादिमनः संयोग इत्येवं लक्षणसमन्वयः । आत्मन्यतिव्याप्तिवारणाय स्मृतिस्वरूपायोग्यत्वे सतीति । चक्षुस्त्वङ्गनासि चक्षुस्त्वङ्गनांस्येवेत्यर्थः । अन्यद् द्रव्याग्राहकम् । दूरस्थितघटस्यापि चक्षुषा ग्रहणादन्यस्येत्युक्तम् । अन्येनापि सन्निहितस्य त्वचा ग्रहणाद्दूरेत्युक्तम् । व्यवहितत्वाभावस्यापनाय परिस्फुटेत्युक्तम् । परिस्फुटत्वमव्यवहितत्वम् ।

**न च तदात्ममात्रग्राह्यं सर्वविषयत्वसिद्धान्तव्याघातात् उच्यते मनः सर्वविषयकमपिबहिर्विषयज्ञानजनने परतन्त्रं । परं चक्षुरादि उपस्थितिर्योगजधर्मः सामान्यलक्षणा च । न पुनश्चक्षुरादिमात्रं स्मृतपदार्थानां मनसा संसर्गग्रहात् कथमन्यथा कविकाव्यादि योगिनां योगजधर्मप्रत्यासत्या मनसा सर्वसाक्षात्काराच्च ।**

नन्विन्द्रियस्य मनस आत्ममात्रग्राहकत्वमित्यत आह मन इति । तत्, मनः, । सर्वेति । सर्वतत्तद्विषयकज्ञानजनकमपि परतन्त्रं, पर व्यापारकं, । परं किमत आह । परमिति । आदिना त्वगादिपरिग्रहः उपस्थितिः, ज्ञानम्, । तथा च चक्षुरादिर्ज्ञानलक्षणा योगधर्मलक्षणा सामान्यलक्षणा च एतद्द्वारा मनो ज्ञानमात्रजनकमित्यर्थः । ननु ज्ञानलक्षणा किमर्थं स्वीकर्त्तव्येत्यत आह न पुनरिति । मात्रमित्यनन्तरं परमित्य नुषज्यते । स्मृतपदार्थानामिति । अयमर्थः सुरभिचन्दनमित्यादिचाक्षुषे मृतेपि स्थितं सौरभं भासते तच्च न ज्ञानलक्षणां विना सौरभेन सह चक्षुष सन्निकर्षाभावात् । ननु सौरभत्वसामान्यलक्षणयैव निर्वाहे कृतं ज्ञानलक्षणा येति चेत् । तथापि सौरभत्वज्ञानस्य विनाज्ञानलक्षणामनिर्वाहात् । किञ्च यत्र शुक्तौ रजतत्वज्ञानानन्तरं रजतमहज्ञानामीत्यनुव्यवसायस्तत्र रजत त्वभानार्थं ज्ञानलक्षणा स्वीकार्य्यैवेति । एवं रजतत्वेन शुक्तिज्ञानानन्तरमनुव्य वसाये शुक्तिभान ज्ञानलक्षणयैव । तत्र शुक्तित्व रूपसामान्यज्ञानाभावात् मानसे ज्ञानलक्षणादित्रय मनस एव प्रत्यासत्तिः न तु चक्षुरादेः तेष नानात्वेन प्रतीन्द्रियं न प्रत्यासत्तित्व कल्पने गौरवादिति ध्येयम् । कवीति । कवेः काव्यमित्यर्थः । तथा च काव्यकारैर्वृद्धपरम्परातस्तत्तत्पदार्थो ज्ञायन्ते ततस्ते ऽनुव्यवसाये भासन्ते तत्प्रेषा काव्यश्रवणानन्तरमन्येषामपि तत्पदार्थज्ञानमिति तच्च न ज्ञानलक्षणां विनेत्यर्थः । योगिनां, युक्तयु- ञ्जानभेदेन द्विविधयोगिनाम्, । योगजधर्मप्रत्यासत्त्या, द्विविधयोगजधर्मप्र- त्यासत्त्या, । तथा चायमर्थो युक्तयोगिना परमाण्वादयो निखिलाः सर्वदा बुध्यन्ते तत्र योगजधर्म एव सन्निकर्षः । युञ्जानयोगिना तु परमाण्वा- दयश्चिन्तासहकृतयोगजधर्मेण बुध्यन्त इति । योगजधर्मश्च बहिर्विष यात्मनोनिवृत्तिरूपप्रणिधानविशेषः । सोऽपश्यत्प्रणिधानेनेति कालिदा- सोक्तम् । मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वा ब्रवीन्मुनि इति याज्ञव ल्क्योक्ति सङ्गच्छते । योगजधर्मसहकारेणापि चक्षुषा चक्षुर्योग्यं गृह्यते न तदयोग्यमपि न खलु योगिनापि रूपं श्रोत्रेण गृह्यते । तदुक्तम् । न रूपे श्रोत्रवृत्तितेति । विप्रकृष्टं व्यवहितं च महत्वादिकमन्तरेणापि गृह्यते ।

तदुक्तम् । विप्रकृष्टं व्यवहितं च सम्यक् पश्यन्ति योगिन इति पश्यामि योजनशतादिति च ॥

प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्या मनसा सर्वग्राह्यं । क्वतद्धि मनःस्वतन्त्रम् अबाह्यवस्तुनि । कान्यबाह्यानि आत्मा तद्योग्यगुणास्तदभावस्तद्वृत्तिर्जातिश्च । के तद्योग्यगुणाः सविकल्पकज्ञानेच्छाप्रयत्नसुखदुःखद्वेषास्तदेकत्वपरिमाणे च । तदेकत्वपरिमाणे न योग्य इति टीकाकृतः । नन्वित्थम्परात्मा परेण गृह्येत तद्गुणाश्च न परात्मतद्गुणानाम्परायोग्यत्वात्स्यादेतत् चक्षुर्य्यदि द्रव्यग्राहकं तदा परमाणवादयोपि गृह्येरन्निति चेन्न तेषां चक्षुरयोग्यत्वात् किन्तावच्चक्षुषो योग्यं महदुद्भूतवद्द्रव्यं परमाणुश्च न महान् आत्मादयश्च न रूपवन्तः पिशाचादयश्च नोद्भूतरूपवन्तः तद्रूपस्यानुद्भूतत्वात् ।

सामान्यलक्षणायां युक्तिमाह प्रमेयत्वेति । सन्निकर्षमन्तरेण प्रत्यक्षत्वाभावाद्वह्नित्वेन निखिलवह्नेर्धूमत्वेन सकलधूमस्य ज्ञानाय सामान्यलक्षणा स्वीकर्त्तव्यैवेति । न चैव सार्वज्ञापत्तिः प्रमेयत्वेन सर्वप्रमेयज्ञानादिति वाच्यम् । प्रमेयत्वेन रूपेण सर्वज्ञत्वे बाधकाभावात्तत्तद्रूपेण सकलपदार्थानां ज्ञानाभावेन तेन तेन रूपेण सार्वज्ञाभावाच्च । विवेचयिष्यते चान्यदुपरिष्टात् । तर्हिसर्वविषयकधीजनने परतन्त्रत्वम् । तद्योग्यगुणाः, । आत्मयोग्यगुणाः, । अदृष्टादिवारणाय योग्येत्युक्तम् । तदभावः, आत्मयोग्यगुणानामभावः, । तद्वृत्तिः, । आत्मवृत्तिः, तद्गुणवृत्तिश्च, सविकल्पकेति निर्विकल्पकस्यातीन्द्रियत्वेनायोग्यत्वा-

दिति भावः । तदेकत्वपरिमाणे, आत्मैकत्वपरिमाणे, टीकाकृत इत्यस्वरसबीजं अहमेकोऽहं महानिति प्रतीतिविरोध इति । आत्मनो विभुत्वेन विभूतानां सर्वमूर्त्तसंयोगित्वेन स्वमनसोऽपि परात्मसंयुक्तत्वात्परात्मप्रत्यक्षं स्यादित्यभिप्रायवानाह नन्विति । इत्थम्, आत्मादीनां मनोयोग्यत्वे, । तद्गुणाश्च । परात्मगुणानामिति । आत्मा च गुणाश्चेत्यात्मगुणाः तथा च परात्मा परात्मगुणाश्च परस्यायोग्या इत्यर्थः । तेषां, परमाण्वादीना,म् । चक्षुरयोग्यत्वाद्विति । तथा च चाक्षुषत्वावच्छिन्नं प्रति चक्षुर्योग्यत्वेन कारणतेत्यर्थः । चक्षुर्योग्यं द्रव्यं दर्शयति महदिति । तथा च द्रव्यचाक्षुषे महत्वसमानाधिकरणोद्भूतरूपवत्त्वमेव योग्यतेत्यर्थः । महत्त्वपदकृत्य दर्शयति । परमाणुरिति । रूपपदकृत्यं दर्शयति आत्मादय इति । उद्भूतपदकृत्यन्दर्शयति पिशाचादय इति तद्रूपस्य, पिशाचरूपस्य, उद्भूतत्व किमत आह उद्भूतत्वमिति । अथोद्भूतत्वं न जातिः । शुक्लत्वादिना सङ्करप्रसङ्गात् । तथा हि शुक्लत्वं विहायोद्भूतत्वमुद्भूतस्पर्शादौ । उद्भूतत्वं विहाय शुक्लत्वमनुद्भूतशुक्लरूपे । उद्भूतशुक्लरूपे चोभयमपि । न च नानैव शुक्लत्वादिव्याप्यमुद्भूतत्वमिति वाच्यम् । चाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेन कारणत्वे तादृशरूपत्वस्यैव कारणतावच्छेदकत्वादनन्तकार्यकारण भावप्रसङ्गाच्च ।

उद्भूतत्वं च जातिविशेष इत्येके । अनुद्भूतत्वरूपजात्यभाव इत्यपरे । योग्यगुणाः योग्यद्रव्यरूपन्तन्मात्रवृत्तिसंख्यापरिमाणपृथक्त्वस्नेहसंयोगविभागपरत्वापरत्वद्रवत्ववेगाः । मात्रपदं घटाकाशादिसंयोगवारणाय कर्म्म च योग्यद्रव्यसमवेतं। जातिस्तु योग्यवस्तुगता द्रव्यत्वरूपादिःसमवायश्च । त्वचो महदुद्भूतरूपस्पर्शवद्योग्यन्द्रव्यम् तेन परमाणुवायुप्रदीपप्रभादयस्त्वचा न गृह्यन्ते परमाणोरमहत्वात् वायो-

नीरूपत्वात् प्रभाया उद्भूतस्पर्शाभावात् गुणाश्च रूपातिरिक्तचक्षुर्योग्यमहदुद्भूतस्पर्शवन्मात्रवृत्तयो महदुद्भूतस्पर्शश्च । अत एव वायुपरिमाणादयस्त्वचा न गृह्यन्ते चक्षुरयोग्यत्वात् न वा प्रदीपप्रभापरिमाणादय उद्भूतस्पर्शवन्मात्रावृत्तित्वात् न वा घटप्रभासंयोगादय उद्भूतस्पर्शवन्मात्रावृत्तित्वात् तत्र ह्यनुद्भूतस्पर्शादयो वर्तन्ते । कर्म्म च योग्यद्रव्यसमवेतम् सामान्यं च योग्यवस्तुसमवेतम् समवायश्च ।

उद्भूतत्वस्य जातित्वे तु तदपि कारणतावच्छेदक[illegible] रूपत्वविशिष्टोद्भूतत्वेनोद्भूतत्वविशिष्टरूपत्वेन वा कारणत्व[illegible]भिप्रायवतां नवीनानाममतमाह । अनुद्भूतत्वेति तत्त्वतत्त्वस्य [illegible]त्वेऽपि तथैव सङ्कर इतिचेत्त शुक्लत्वादिव्याप्यतानैवानुद्भूतत्वं [illegible]रेतत्तिविरहात्तेन रूपेण कारणत्वाभावात् । चक्षुर्योग्यगुणानाह [illegible] गुणा इति । योग्येति परमाणुरूपवारणाय । तन्मात्रवृत्ति, [illegible]व्यमात्रवृत्ति, । कर्म चेति । तथा च योग्यद्रव्यसमवेतं कर्म चक्षुर्ग्राह्यमित्यर्थः । जातिश्चेति । वस्तुपदङ्गुणकर्मगतजातिलाभाय । तथा च [illegible] द्रव्यसमवेतजातिषु महत्त्वसमानाधिकरणोद्भूतरूपवत्त्व स्वाश्रयसमवाय-सम्बन्धेन योग्यगुणकर्मसमवेतजातिषु तु स्वाश्रयसमवेतसमवायेन । समवायश्चेति । द्रव्यवृत्तित्वावच्छेदेन समवाये स्वाश्रयसम्बन्धित्वेन द्रव्यसमवेतवृत्तित्वावच्छेदेन समवाये स्वाश्रयसमवेतसम्बन्धित्वेन तादृशरूपवत्त्वस्य सत्त्वादिति भावः । अथ प्राचां मते त्वगिन्द्रियग्राह्यद्रव्यमाह [illegible] । तथा च त्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वे सति स्पर्शवत्त्वरूपयोग्यत्वं तन्त्रमित्यर्थः । त्वगिन्द्रिययोग्यगुणानाह योग्य-गुणाश्चेति । रूपवारणाय रूपातिरिक्तेति । अथ रूपातिरिक्तचक्षुर्योग्यस्य

प्रभापरिमाणादेस्त्वचो योग्यत्वं स्यादित्यत आह महदुद्भूतस्पर्शवन्मात्रवृ-त्तय इति। नन्वेवं रूपातिरिक्तचक्षुर्योग्यत्वे सति महदुद्भूतस्पर्शवन्मात्रवृत्तित्वमेव त्वचो योग्यत्वमिति फलितम् तच्च महदुद्भूतस्पर्शे न सम्भवति तस्य चक्षुर्योग्यत्वाभावाद् अत आह महदुद्भूतस्पर्शश्चेति। महत्त्वसमानाधिकरणोद्भूतस्पर्शश्चेत्यर्थः। परमाणुस्पर्शवारणाय महदिति। प्रभास्पर्शवारणायोद्भूतेति। अत एव, चक्षुर्योग्यत्वपददानादेव,। त्वचो योग्यकर्म किमत आह कर्म चेति। तथा च कर्मणि त्वचो योग्यत्वं महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्समवेतत्वं त्वचो योग्यं द्रव्यगुणकर्मसमवेतं सामान्यमाह सामान्य चेति। योग्यवस्तुसमवेतं, योग्यद्रव्यगुणकर्मसमवेत, योग्यत्वं त्रिषु यथोक्तमेव। अत्र रूपत्वभिन्नत्वमपि देयम्। तथा च रूपत्वभिन्नद्रव्यगुणकर्मसमवेतं सामान्यं त्वचो योग्यमित्यर्थः। समवायस्तु योग्यद्रव्यगुणकर्मसमवायस्त्वचोयोग्य इत्यर्थः॥

मीमांसकास्तु महदुद्भूतस्पर्शवद्द्रव्यत्वेनैव त्वचोयोग्यता लाघवात् न तु महदुद्भूतरूपमपि तत्र प्रयोजकं गौरवात्। अतो वायोरपि स्पार्शनप्रत्यक्षम्। न च बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारत्वावच्छेदेनोद्भूतरूपस्य हेतुत्वाद्वायौ च तदभावान्नैवमिति वाच्यम्। लाघवाद्द्रव्यचाक्षुषत्वावच्छेदेन तस्य हेतुत्वादित्याहुः।

ननु महदुद्भूतरूपस्पर्शवद्द्रव्यत्वेन न त्वचो योग्यत्वं किन्तु महदुद्भूतस्पर्शवत्त्वेन। तथा च वायोरपि प्रत्यक्षं भवत्येवेति नवीनपथप्रवृत्तानां मीमांसकानां मतमाह मीमांसकास्त्विति। तत्र, त्वाचप्रत्यक्षे, गौरवात् महदुद्भूतरूपप्रवेशे गौरवात्। ननु द्रव्यचाक्षुषत्वावच्छिन्नम्प्रति महदुद्भूतरूपस्य कारणत्वमवश्यं वाच्यमन्यथाऽऽत्मपवनपिशाचादेश्चाक्षुषत्वाप-

त्तिः । तथा च लाघवात्तादृशरूपस्य बहिरिन्द्रियद्रव्यलौकिकप्रत्यक्षत्वमेव कार्यतावच्छेदकमस्त्वित्याशयवानाह न चेति । तदभावात्, तादृगरूपा-भावात्, । नैवं, न वायोः स्पार्शनप्रत्यक्षं, लाघवादिति । द्रव्यचाक्षुषत्वस्य बहिरिन्द्रियजन्यद्रव्यलौकिकप्रत्यक्षत्वापेक्षया लघुत्वादित्यर्थः । तादृगरूपस्य बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वे कार्यतावच्छेदकत्वमुताऽन्यतरद्रव्यप्रत्यक्षत्वे वेति विनिगमनाविरहश्चेति बोध्यम् । तद्धेतुत्वात्, महदुद्भूतरूपस्य हेतुत्वात्, । अत्रेदं प्रतिभाति यद्यपि द्रव्यचाक्षुषत्वावच्छिन्नम्प्रति महदुद्भूतरूपवत्त्वेन द्रव्यस्पार्शनत्वावच्छिन्नं प्रति च महदुद्भूतस्पर्शवत्त्वेन हेतुत्वमिति पर्यवसितम् । तथाऽपि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति किं नियामकम् । न तावन्महदुद्भूतस्पर्शवत्त्व प्रभायास्तादृशप्रत्यक्षं न स्यात् । न चेष्टापत्तिः प्रभायास्तेजसो रूपत्वात् प्रभाम्पश्यामीति प्रतीतेश्च । नचेय प्रतीती रूपं पश्यामीति वद्द्रव्यत्वाभावेऽप्युपपन्नेति वाच्यम् प्रभा चलति प्रभा शुक्लेति प्रतीतेः । नचेय भ्रान्तिः बाधकं विना भ्रमत्वायोगात् । नापि महदुद्भूतरूपवत्त्व । वायोरूष्मादेश्च स्पार्शनं न स्यात् । न भवत्येवेति चेत् । शरीरपवनसंयोगानन्तरं शीतोवायुरनुष्णोवायुरिति स्पार्शन प्रत्यक्षानुपपत्तिः । नचेयं स्पर्शमात्रगोचरेति वाच्यम् । वायुविशेष्यकत्वानापत्तेः वायुं स्पृशामीत्यनुव्यवसायानुपपत्तेश्च । किं च तादृशस्पर्शस्यैव बहिर्द्रव्यप्रत्यक्षम्प्रति कारणत्वमुच्यताम् । प्रभायाः प्रत्यक्षत्वाभावे इष्टापत्तेः । अथ प्रभां पश्यामीति प्रतीतिरनुपपन्नेति चेत्तर्हि वायुं स्पृशामीति प्रतीतावपि दीयतां दृष्टिरिति तस्माद्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति न तादृशरूपस्य न वा तादृशस्पर्शस्य न पुनस्तदुभयोर्नियामकत्वं किन्तु विभुवृत्तिभिन्नविशेषगुणवत्त्वस्य नियामकत्वं । एवं च महदुद्भूतस्पर्शवत्त्वस्य चायोग्यत्वेन महदुद्भूतरूपवत्त्वस्य चक्षुर्योग्यत्वेन च पवनप्रभाद्योः प्रत्यक्षत्वे न काप्यनुपपत्तिः पवने तादृशस्पर्शात्मकतादृशविशेषगुणवत्त्वस्य प्रभायां तादृशरूपस्य तादृशविशेषगुणस्य सत्त्वादिति । एवं च पवनप्रभादिवत्सङ्ख्यापरिमाणादेः क्रियाया जातेश्च प्रत्यक्षत्वं भवत्येवेति दिक् ॥

वैशेषिकास्तु समवायो न प्रत्यक्षः सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् कथमन्यथा घटाकाशसंयोगो न प्रत्यक्षः । न च समवायस्य सर्वे त्वाश्रयाः प्रत्यक्षाः परमाण्वादेरयोग्यत्वादित्याहुस्तन्न । तथा हेतुतायां मानाभावात् । न च घटाकाशसंयोगस्य प्रत्यक्षतापत्तिः योग्यमात्रसमवेतगुणस्यैव योग्यत्वात् ।

ननु व्यासज्यवृत्तिप्रत्यक्षे समानेन्द्रियजयावदाश्रयप्रत्यक्षस्य हेतुत्व- [illegible] मिष्टम् । तथा च समवायस्य कथं प्रत्यक्षमित्यभिप्राय- [illegible] मतं दूषयितुमाह वैशेषिकास्त्विति । सम्बन्धेति । [illegible] व्यासज्यवृत्तित्वादिति भावः । अन्यथा, सम्बन्धप्रत्यक्षे यावदा- [illegible] हेतुत्वाभावे, । घटाकाशेति । स्वाश्रयसमवायसंबन्धेन गगन- [illegible] पि महत्त्वस्य घटमादायैव रूपवत्त्वस्य सत्त्वादिति भावः । अथ सम- [illegible] बाधकमाह न चेति । तथाहेतुतायां, सम्बन्धप्रत्यक्षे यावदा- [illegible] प्रत्यक्षहेतुतायाम्, । योग्यमात्रेति । तथा च घटाकाशसंयोगस्य योग्यमा- त्रसमवेतत्वाभावादित्यर्थः ।

किं च लाघवात्संयोगप्रत्यक्षत्वावच्छेदेन यावदाश्रयप्रत्यक्षस्य हेतुता युज्यते न तु सम्बन्धप्रत्यक्षत्वावच्छेदेन सम्बन्धत्वं हि संयोगसमवायान्यतरत्वमिति गौरवात् ।

ननु तर्हि यावदाश्रयप्रत्यक्षस्य कुत्र हेतुत्वमत आह किं चेति । [illegible] कार्यतावच्छेदके लाघवात् । प्रत्युतगौरवमाह सम्बन्धत्वमिति । [illegible] । व्यासज्यवृत्तिधर्मप्रत्यक्षे समानेन्द्रियजयावदाश्रयप्रत्य- [illegible] रूपेण कार्यकारणभावः । न च व्यासज्यवृत्तिधर्मप्रत्यक्षत्वेन याव-

दाश्रयलौकिकप्रत्यक्षत्वेनेति वाच्यम् । जातिचाक्षुषे व्यभिचारात् । नापि द्विष्ठगुणचाक्षुषत्वेन द्विष्टतद्गुणाश्रयविषयकचाक्षुषत्वेनेति तत्तदाश्रयभेदेनासङ्ख्यकार्यकारणभावप्रसङ्गात् । नापि तत्तद्द्वित्वादिचाक्षुषत्वेन तत्तद्द्वित्वाश्रयचाक्षुषत्वेनेति तत्तद्द्वित्वाश्रयभेदानन्तकार्यकारणभावप्रसङ्गादिति । अत्रोच्यते । व्यासज्यवृत्तिगुणप्रत्यक्षत्वेन समानेन्द्रियजयावदाश्रयलौकिकप्रत्यक्षत्वेन हेतुहेतुमद्भावः । एवं जातिप्रत्यक्षे समवायप्रत्यक्षेच न व्यभिचारः । जातिसमवायप्रत्यक्षस्य कार्यतावच्छेदकानाक्रान्तत्वात् । अपरे तु व्यासज्यवृत्तिधर्मप्रत्यक्षत्वेन यावदाश्रयप्रत्यक्षत्वेन न कार्यकारणभावोऽपि तु गुणचाक्षुषत्वावच्छिन्नं प्रतिस्वाश्रयसमवेतत्वसंबन्धेन रूपाभावो महत्वाभावश्च प्रतिबन्धको नातो घटाकाशसंयोगस्य प्रत्यक्षतापत्तिः । त्रसरेणुचाक्षुषे व्यभिचारवारणाय गुणेत्यपि वदन्ति । तत्र चैत्रमैत्रोभयसन्निकर्षे सत्यपि दोषाद्यत्र न तदुभयप्रत्यक्षं तन्निष्ठद्वित्वसंयोगादेः प्रत्यक्षतापत्तौ गतिश्चिन्तनीयेति संक्षेपः । अथ व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयसन्निकर्षोप्यावश्यकः । अन्यथा यत्र घटपटोभयसन्निकर्षो नष्टस्तद्द्वितीयक्षणे एकाश्रयमात्रसन्निकर्षे सत्यपि तन्निष्टद्वित्वसंयोगादेः प्रत्यक्षतापत्तिः । तस्य व्यासज्यवृत्तिधर्मचाक्षुषादिप्रत्यक्षत्वेन यावदाश्रयचक्षुःसंयोगत्वेन तत्र द्वित्वादिचाक्षुषत्वेन यावत्तद्द्वित्वाश्रयनिष्ठचक्षुःसंयोगत्वेन वा न कार्यकारणभावः जातिप्रत्यक्षे व्यभिचारात् । द्वितीयकल्पे यदि यावत्वं चक्षुःसंयोगविशेषणं तदातादृशयावच्चक्षु.सयोगस्य कुत्राप्यसम्भवात् । यदि द्वित्वाद्याश्रयविशेषणं तथापि यावद्द्वित्वाद्याश्रयवृत्तिचक्षुःसंयोगस्याप्रसिद्धेरिति चेत् । उच्यते गुणचाक्षुषत्वावच्छिन्नं प्रतिसमवायसम्बन्धावच्छिन्नप्रतियोगिताकचक्षुःसयोगविशिष्टद्रव्यत्वसामान्याभावः प्रतिबन्धकः । तेन द्वित्वैकाश्रयमात्रसन्निकर्षदशायां द्वित्वादेर्न प्रत्यक्षम् । एकाश्रयमात्रचक्षुःसयोगसत्वेप्यपराश्रयचक्षुः सयोगाभावसत्वे च विशिष्टद्रव्यत्वाभावस्य सत्वान्द्वित्वसंयोगादेः प्रत्यक्षतापत्तिः ॥ यत्रोभयत्रचक्षुःसंयोगस्तत्र संयोगस्याप्यव्याप्यवृत्तित्वेपि तद्विशिष्टद्रव्यत्वस्य व्याप्यवृत्तित्वान्न द्वित्वसंयोगादेः प्रत्यक्षानुपपत्तिः ।

**घ्राणयोग्यो महत्त्वसमानाधिकरणोद्भूतो गन्धस्तद्गतं सामान्यं तयोस्समवायश्च। अत एव न परमाणुगन्धो गृह्यते महत्त्वासमानाधिकरणत्वात् न वा घ्राणमणिवज्रादिगन्धो ऽनुद्भूतत्वात्।**

घ्राणेन्द्रियस्य द्रव्यग्राहकत्वायोग्यत्वाद्गुणवृत्तिजातिसमवायानां योग्यत्वमाह घ्राणेति तथा चात्र महदुद्भूतगन्धवत्त्वमेव योग्यत्वं तादृगगन्धसमवेतत्वं च जातौ तदुभयसम्बन्धत्वं च समवाय इति। तद्गतं, गन्धगतं,। तयोः, गन्धगन्धत्वयोः,। अत एव, महत्त्वसमानाधिकरणेति विशेषणादेव,। वज्रादिगन्धः घ्राणयोग्य इत्यनुषज्यते। आदिनापमादिसंग्रहः। अनुद्भूतत्वादिति। ननु वज्रादावनुद्भूतगन्धे किं मानमिति चेत्। वज्रभस्मनि गन्धोपलब्ध्यैव वज्रे गन्धसिद्धिस्तथा हि। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तद्द्रव्यं तदुपादानोपादेयमिति व्याप्तिरिति। वज्रध्वंसजन्ये भस्मनि गन्धोपलब्ध्या वज्रेऽपि गन्धसिद्धिः। अत्र मणिमयद्रव्यध्वंसजन्यदाहे मण्युपादानोपादेयत्वाभावात्प्रथमं द्रव्यपदं कामिनीचरणाघातेनाशोकपुष्पोद्गम इति काव्यादौ प्रसिद्धं तथा च पुष्परूपद्रव्यादौ कामिनीचरणाभिघातध्वंसजन्यत्वात्तत्र व्यभिचारवारणाय द्वितीयं द्रव्यपदं। यद्वा हरिवंशश्रवणजन्यपुत्रप्रतिबन्धकीभूतादृष्टध्वंसजन्ये पुत्ररूपद्रव्ये व्यभिचारवारणाय द्वितीयं द्रव्यपदम्।

**रसनायोग्यो महत्त्वसमानाधिकरणोद्भूतो रसः तद्गतं सामान्यं तयोस्समवायश्च तेनपरमाणुरसो न गृह्यते। महत्त्वासमानाधिकरणत्वात्। न वा मण्यादिरसोऽनुत्भूतत्वात्। श्रवणयोग्यः शब्दस्तद्गता जातिस्तयोस्समवायश्चेति संक्षेपः।**

रसनेन्द्रियस्य द्रव्यग्रहायोग्यत्वात् रसस्य तद्वृत्तिजातिसमवायाना योग्यत्वमाह रसन इति। तथा च महत्त्वसमानाधिकरणोद्भूतरसत्व-

मेव योग्यत्वं तादृशरससमवेतत्वं च जातौ समवाये च [illegible]त्वमिति । तद्गतम्, रसगतम्, । तयोः रसरसत्वयोः । समवाये [illegible] इत्यनुपपद्यते । तेन महत्त्वसमानाधिकरणेति विशेषणद्वयेन । [illegible] इति शब्दत इत्यनुपपद्यते । तद्गताः, शब्दगताः । [illegible] अत्र द्रव्यसमवेतमात्रप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य [illegible] त्वेन तद्गतजातिप्रत्यक्षे तु स्वाश्रयसमवेतसमवायेन [illegible] कारणत्वमिति सुधीभिर्विभाव्य बोध्यमिति संक्षेपार्थः ।

**तस्येन्द्रियस्यासन्निकृष्टाग्राहकत्वात् सन्निकर्षाः सहकारिणः । के ते सन्निकर्षाः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति । अथ केन सन्निकर्षेण किं गृह्यते । द्रव्यं संयोगेन शब्देतरगुणकर्मद्रव्यगता जातिः संयुक्तसमवायेन ।**

तस्य प्रत्यक्षस्वरूपस्य ते इन्द्रियसन्निकर्षाः [illegible] नाह संयोग इति । द्रव्यमिति । तथा च द्रव्यप्रत्यक्षत्वा[illegible] न्द्रियसंयोगत्वेन कारणतेत्यर्थः । इन्द्रियत्वस्यैकस्याभावा[illegible] संयोगस्यापि नैकत्वम् । तथा च विषयतासम्बन्धेन द्र[illegible] चक्षुःसंयोग एव विषयत्वसम्बन्धेन द्रव्यलौकिकप्रत्यक्षे [illegible] विषयतयाऽऽत्मलौकिकप्रत्यक्षे चात्ममनःसंयोगः का[illegible] श्रवणस्य शब्दाश्रयभिन्नत्वाभावेन संयुक्तसमवायाभावा[illegible] गुणविशेषणम् । संयुक्तसमवायेनेति । अयमर्थः । इन्द्रियत्वस्य [illegible] तत्तदिन्द्रियसंयुक्तसमवायो वाच्यस्तथा च द्रव्यसमवेत[illegible] प्रति चक्षुःसंयुक्तसमवायः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्ष[illegible] त्वक्संयुक्तसमवायः कारणम् । परं तु महत्त्वसमानाधि[illegible] च्छिन्नत्व तादृशोद्भूतस्पर्शावच्छिन्नत्व च पूर्वोक्तरीत्या [illegible]

वा बोध्यम् । गन्धलौकिकप्रत्यक्षे घ्राणसंयुक्तसमवायः रसलौकिकप्रत्यक्षे रसनासंयुक्तसमवायः । आत्मसमवेतलौकिकप्रत्यक्षे मनःसंयुक्तसमवायः ।

**भवति हि घटादि चक्षुरादिसंयुक्तं तत्र समवेतं रूपादि स्पन्दो जातिश्च द्रव्यत्वादिः शब्देतरगुणकर्मगता जातिः संयुक्तसमवेतसमवायेन । भवति हि चक्षुरादिसंयुक्तं घटादि तत्समवेतं रूपादि तत्र समवायो रूपत्वादेः । शब्दः समवायेन कर्णशष्कुल्यवच्छिन्ने नभसि शब्दस्य समवायात् । शब्दगता तु जातिः समवेतसमवायेन श्रवणसमवेते शब्दे शब्दत्वादीनां समवायात् । विशेषणतया समवायोऽभावश्च तत्र संयोगसमवाययोरभावात् ।**

संयुक्तसमवायं दर्शयति भवति हीति । संयुक्तसमवायग्राह्या जातिः केत्यत आह द्रव्यत्वादिरिति । शब्देतरगुणकर्मगतेति । ननु गुणगतजातौ मानाभावात् किं तद्ग्राहकसन्निकर्षेणेति चेत् न । तत्रासमवायिकारणतावच्छेदकतया गुणत्वादिसिद्धेः । तथा हि । कारणतायाः सावच्छिन्नत्वनियमेन द्रव्यकर्मभिन्नत्तावन्निष्ठकारणताया अवच्छेदकं किंचिद्वाच्यम् तच्च न रूपत्वादि न्यूनवृत्तित्वात् नापि सत्ताऽधिकवृत्तित्वात् । तथा च निखिलगुणनिष्ठा जातिरवश्य वाच्या सैव गुणत्वमिति । एवं कर्मत्वमपि बोध्यम् । द्रव्यसमवेतसमवेतलौकिकचाक्षुषप्रत्यक्षे महत्त्वसमानाधिकरणोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायः । द्रव्यसमवेत समवेतलौकिकस्पार्शनप्रत्यक्ष घ्राणसयुक्तसमवेतसमवायः । रससमवेतस्य रसनाजन्यलौकिकप्रत्यक्षे रसनासयुक्तसमवेतसमवायः । आत्मसमवेतसमवेतलौकिकप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणमिति । शब्द इति शब्दलौकिकप्रत्यक्षं प्रति श्रोत्रावच्छिन्नसमवायः कारणमि-

त्यर्थः । तादृशसमवायलक्षणसन्निकर्षं शब्दे दर्शयति कर्णेति । शब्दत्व-ञ्जातिरिति शब्दसमवेतलौकिकप्रत्यक्षं प्रति श्रोत्रावच्छिन्नसमवेतसमवायः कारणमित्यर्थः । समवायाभावयोर्ग्राहकं सन्निकर्षमाह विशेषणतयेति । नन्वभावसमवायग्रहे संयोगादिरूपसन्निकर्ष एवोच्यतामत आह तत्रेति । तत्र, समवायाभावयोः, ।

**सा च विशेषणता द्विविधा । इन्द्रियविशेषणता इन्द्रियसन्निकृष्टविशेषणता च । तत्रेन्द्रियविशेषणतया शब्दाभावो गृह्यते इन्द्रियरूपे श्रवणादौ तस्य विशेषणत्वात् । इन्द्रियसन्निकृष्टविशेषणतया च भूतलादौ घटाभावादि इन्द्रियसन्निकृष्टभूतलादौ तस्य विशेषणत्वात् । इन्द्रियसन्निकृष्टविशेषणताऽपि बहुविधा सन्निकर्षस्य बहुविधत्वादवसेया ।**

अथ विशेषणताया द्वैविध्यमाह इन्द्रियविशेषणतेति । विशेषणता स्वरूपसम्बन्धः । तत्स्वरूपमिन्द्रियात्मकमभावात्मकं च । तत्र श्रोत्रेन्द्रिये शब्दाभावरूपविशेषणतायाः सत्त्वादिन्द्रियविशेषणता । एवमिन्द्रियसम्बद्धभूतलादावभावसत्त्वे भूतलादावभावरूपायाः इन्द्रियसम्बद्धविशेषणतायाः सत्त्वाद्विशेषणताया द्वैविध्यमित्यर्थः । यद्वा विशेषणता प्रकारता तथा चेन्द्रियजन्येन्द्रियविशेष्यकज्ञाने प्रकारता एवमिन्द्रियसम्बद्धविशेष्यकेन्द्रियजन्यज्ञानप्रकारतेति योगार्थपुरःसरं द्वैविध्यमाह विशेषणतेति । अथ वा विशेषणता आश्रयता । तथा चेन्द्रिये तत्सम्बद्धे चाभावसमवायाद्याश्रयतासम्भवेन योगार्थपुरस्सरं द्वैविध्यमाह विशेषणतेति । तत्र, विशेषणताद्वयमध्ये, शब्दाभाव इत्यनन्तरं शब्दादिसमवायश्चेति पूरणीयं । तस्य अभावस्य समवायस्य, च । भूतलादाविति । अत्रापि भूतलादिवृत्तिरूपसत्तादिसमवायो ऽपीन्द्रियसन्निकृष्टविशेषणतया ग्राह्य

इति बोध्यम् । बहुविधेति । अत्रेदं बाहुल्य श्रोत्रविशेषणतया ऽऽकाशवृत्यभावो गृह्यते तत्कार्यतावच्छेदकमाकाशवृत्यभावत्वाच्छिन्नविषयतया श्रौत्रत्व । श्रोत्रसमवेतविशेषणतया शब्दवृत्यभावो गृह्यते तत्कार्यतावच्छेदकं च शब्दवृत्यभावत्वाच्छिन्नविषयतया श्रौत्रत्वं । श्रोत्रसमवेतसमवेतविशेषणतया शब्दत्ववृत्यभावो गृह्यते तत्कार्यतावच्छेदकं शब्दसमवेतवृत्यभावत्वावच्छिन्नविषयतया श्रौत्रत्वमिति । चक्षुःसंयुक्तविशेषणतया भूतलादौ घटाद्यभावो गृह्यते तत्कार्यतावच्छेदकं भूतलादिवृत्यभावत्वावच्छिन्नविषयतया चाक्षुषत्वम् । चक्षुःसमयुक्तसमवेतविशेषणतया च गुणादावभावो गृह्यते तत्कार्यतावच्छेदकं गुणादिवृत्यभावत्वावच्छिन्नविषयतया चाक्षुषत्व । चक्षुःसंयुक्तसमवेतसमवेतविशेषणतया गुणत्वादावभावो गृह्यते तत्कार्यतावच्छेदकं गुणत्वादिवृत्यभावत्वावच्छिन्नविषयतया चाक्षुषत्वं । एवं त्वाचेऽपीति बोध्यम् ॥

**ननु संयोगो न प्रत्यासत्तिः संयुक्तसमवायेन घटादिग्रहसम्भवात् इन्द्रियसंयुक्ते कपालादौ तेषां समवायात् नैवं । आत्मनि तदसम्भवात्तस्यासमवेतत्वादिति संक्षेपः ।**

ननु संयोग इति । नन्वेवं संयोगग्राह्यो घटादिर्न गृह्येतेत्यत आह संयुक्तेति तदेवाह इन्द्रियेति । तेषां, घटादीनां, । तदसम्भवात् संयुक्तसमवायासम्भवात, । तस्य आत्मनः, । इदमुपलक्षणं त्रुटावेव विश्रान्तिरिति पक्षे त्रुटेरप्रत्यक्षत्वमपि बोध्यम् । ननु मानसेतरद्रव्यप्रत्यक्षमात्रेव संयुक्तसमवायस्य हेतुत्वमस्तु । न च परमाणुद्व्यणुकयोर्मानाभावे त्रुटेः प्रत्यक्षत्वाभावेन त्रुटेरपि सिद्धिर्नस्यादिति वाच्यम् । तयोरनुमानसिद्धत्वात् । तथा हि त्रुटिः सावयवा चाक्षुषद्रव्यत्वाद्घटवदित्यवयसिद्धौ ते चायवाः सावयवाः चाक्षुषद्रव्यसमवायित्वादिति । न चैते ऽपि सावयवाः । चाक्षुषद्रव्यसमवायिसमवायित्वादिति वाच्यम् । मेरुसर्षपयोस्तुल्यावयवत्वप्रसङ्गादित्याद्यभि-

प्रायवानाह संक्षेप इति । इदं तु बोध्यम् । द्रव्यचाक्षुषं प्रति चक्षुःसंयु समवेतसमवायस्यैव हेतुत्वसम्भवे किं चक्षुःसंयोगस्य तत्संयुक्तसमवायस्य हेतुत्वकल्पनया । एवं च त्रुटेरप्यवयवादिसिद्धिः सुलभेति । इत्थं च स्वा यसमवेतसमवायेनैवोद्भूतरूपस्याप्येक एव कार्यकारणभाव इति । न ध्याः चक्षुःसंयोगतत्संयुक्तसमवायतत्संयुक्तसमवेतसमवायानां हेतुत्व ल्पनमपेक्ष्य परमाणुद्व्यणुकयोः कल्पनं महत्त्वस्य कार्यकारणभावकल्पन ञ्चेति तवैव गौरवं । त्रुटावणुत्वव्यवहारस्त्वपकृष्टपरिमाणवत्त्वेन । निरू नुमानं चाप्रयोजकं । अन्यथा चाक्षुषद्रव्यसमवायिसमवायिसमवायित्वा रीत्यानवस्थापत्तेः । मेरुसर्षपयोस्तुल्यावयवत्ववारणान्तु त्रुटौ विश्राम ल्पनादपिसम्भाव्यत इति दिक् ॥

स्यादेतदन्धकारस्थघटादि किमिति चक्षु नोपलभ्यते संयोगप्रत्यासत्तेस्सत्वादिति चेदुच्य चक्षुषा द्रव्यग्रहे महदुद्भूतरूपालोकसंयोगस्सहकारी चान्धकारस्थघटे सोऽस्ति । न च महत्वोद्भूतेतिव र्थं परमाणुषु चक्षुरादितेजःसंयोगयोर्विद्यमानत्वात् नन्वेवं चक्षुषा तेजःप्रत्ययो न स्यात्तत्र तेजःसंयो गाभावात् । प्रदीपे तत्प्रभासंयोगोऽस्तीति चेत् ।

चक्षुषेति । तथा च द्रव्यचाक्षुषत्वावच्छिन्नं प्रति महत्त्वसमा धिकरूपवान्य आलोकस्तत्संयोगः सहकारीत्यर्थः । न च विडालादिच क्षुषे व्यभिचार इति वाच्यम् । मानुषचाक्षुषत्वावच्छिन्नं प्रति तादृशालोक योगस्य हेतुत्वात् । सः तादृशआलोकसंयोगः, । नन्वालोकसंयोगस्ये कारणत्वमस्तु किं महदुद्भूतेति विशेषणदानेनेत्याह न चेति । तेह परमाणुवति तथा चान्धकारस्थघटे तेजःपरमाणुसंयोगस्योद्भूतरूपवद लोकसंयोगत्वेपि न महदालोकसंयोगत्वम् । चक्षुःसंयोगस्य महदालो सम्बन्धत्वेपि चक्षुष्युद्भूतरूपाभावेन तस्य नोद्भूतरूपवदालोकसंयोगत्वा

ति न तयोश्चाक्षुषमित्यर्थः। एवं द्रव्यचाक्षुषत्वावच्छिन्नं प्रति तादृशालोकसंयोगस्य हेतुत्वे,। तत्र तेजसि,। न तु तैजसि तेजःसंयोगो नास्तीत्याशङ्कते प्रदीप इति। तत्प्रभा प्रदीपप्रभा,। तथा च प्रदीपरूपे तैजसि प्रभारूपतेजःसंयोगस्य सत्त्वान्नोक्तदोष इति भावः॥

**मणिप्रभादौ तदभावात्। दृश्यते च महान्धकारे चन्द्रकान्तप्रभृतिमणिविशेषप्रभा। अथालोकेतरद्रव्यचाक्षुषं प्रत्यालोकसंयोगः सहकारीति चेन्न। महान्धकारे सुवर्णरूपतेजःसाक्षात्कारापत्तेः।**

ननु सर्वत्र तैजसि तेजःसंयोगाभावाद्व्यभिचार इत्याह मणीति। तदभावात् तादृशतेजःसंयोगाभावात्, व्यभिचारन्दर्शयति दृश्यते चेति। तथा च तेजःसंयोगमन्तरेणापि प्रभाप्रत्यक्षसम्भवाद्व्यभिचार इत्यर्थः। ननु कार्यतावच्छेदककोटौ तेजोभिन्नत्वमपि देयमित्याह अथालोक इति। तथा चालोकस्य तेजःस्वरूपत्वात्तेजःप्रत्यक्षे तेजःसंयोगो नापेक्षित इति भावः। सुवर्णेति तथा च सुवर्णात्मकतेजःप्रत्यक्षे तेजःसंयोगस्यापेक्षितत्वादित्यर्थः। ननु सुवर्णस्य तैजसत्वसिद्धौ तच्चाक्षुषे व्यभिचारः। तत्रैव मानं न पश्याम इति चेत् सुवर्णं तैजसं अत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वात्। यत्रात्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वाभावस्तत्र तैजसत्वाभावो यथा पृथिव्यामिति। न चोपष्टम्भकपार्थिवभागे व्यभिचार इति वाच्यम्। जलमध्यगतमसीवत्तदुपष्टम्भकस्यभाग द्रुतत्वाभावात्। न चोक्तहेतुरस्तु पृथिवीत्वादिकमप्यस्त्वत्युक्तानुमानमप्रयोजकमिति वाच्यम्। पृथिवीजलद्रवत्वयोरत्यन्ताग्निसंयोगनाश्यत्वादिति। ननु पीतिमगुरुत्वाश्रये सर्वत्र पृथिवीत्वस्य सत्त्वात् तदाश्रयत्वेन सुवर्णेपि पृथिवीत्वमनुमेयमिति। तदुक्तं पीतिमा च गुरुत्वं च दाहे यस्य च रक्तिमा। तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यत इति चेन्न। सुवर्णे पीतिमगुरुत्वाश्रयत्वाभावात्। किं तु पीति-

मगुरुत्वाश्रयविलक्षणद्रव्यसंयुक्तत्ववत्सुवर्णं तथा हि । अत्यन्ताग्निसंयोगे सति पीतिमगुरुत्वाश्रयो विलक्षणद्रवद्द्रव्यसंयोगवान् तादृशसंयोगे सति रूपान्तराभावात्तप्ततोयमध्यगतारक्तपटवदिति संक्षेपः ।

अत्रोच्यते द्रव्यचाक्षुषमात्रे आलोकसंयोगो हेतुः । न चालोकचाक्षुषे व्यभिचारः आलोकाकाशसंयोगस्यालोकेऽपि सत्वात्तस्य द्विनिष्ठत्वात् न । चैवमन्धकारे सुवर्णसाक्षात्कारापत्तिः अनभिभूतरूपालोकसंयोगस्यैव हेतुत्वात् सुवर्णरूपं त्वभिभूतं अन्यथा सुवर्णरूपालोकसंयोगाद्द्रव्यान्तरग्रहापत्तिः । सम्प्रदायविदस्तु सुवर्णभिन्नं यत्तेजस्तद्भिन्नद्रव्यचाक्षुषे आलोकसंयोगो हेतुः । भवति च सुवर्णमपि सुवर्णभिन्नं यत्तेजस्तद्भिन्नमतस्तद्ग्रहेप्यालोकसंयोगो हेतुस्तेनान्धकारे न सुवर्णसाक्षात्कार इत्याहुः ।

आलोकसंयोगः महदुद्भूतरूपवदालोकसंयोगः, । आलोकाकाश इति । अयमर्थः चाक्षुषं प्रत्यालोकसंयोगः कारणं । आलोकाकाशसंयोगस्याप्यालोकसंयोगत्वेन व्यभिचाराभाव इति । आकाशस्य व्यापकत्वेन तत्संयोगस्य सर्वत्र सम्भवात् आकाश इत्युक्तं । नन्वालोकस्याकाशेन सह संयोगो नालोकेन सहेत्यत आह तस्येति । तस्य आलोकाकाशसंयोगस्य, द्विनिष्ठत्वादिति । आलोकाकाशोभयनिष्ठत्वादित्यर्थः । एवमेतादृशसंयोगस्यापि हेतुत्वे, । स्वर्णेति स्वर्णाकाशसंयोगस्य सत्वादित्यर्थः । अनभिभूतेति । अनभिभूतरूपवान्यो महदालोकस्तत्संयोगस्यैव हेतुत्वादित्यर्थः । ननु प्रकृते किमायातमतआह स्वर्णरूपमिति । अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणं । साजात्यमिह रूपत्वेन । तथा च पार्थिवभागरूपस्य ग्रहणेन सुवर्णरूपस्याग्रहणमिति । तत्र किं मानमित्यत आह अन्य-

षेति । अन्यथा स्वर्णरूपस्याभिभूतत्वाभावे, । सुवर्णेति । अनभिभूतरूपा श्रयप्रदीपवत् परप्रकाशकत्वं स्यादिति भावः । सुवर्णभिन्नमिति । सुवर्णभिन्नतेजः प्रदीपः तद्भिन्नं द्रव्यं सुवर्णं घटादिश्च तच्चाक्षुषे निरुक्तालोकसहकारीत्यर्थः सुवर्णमपीत्यस्य तद्भिन्नमित्यनेनान्वयः । तद्ग्रहे सुवर्णादिग्रहे, । कार्यतावच्छेदके गौरवादाहुरित्युक्तम् ।

**तथापि पूर्वस्यां दिश्यालोकसंयोगवतः परस्यां तदसंयुक्तस्य भित्त्यादेः परदिगवस्थितपुरुषेण साक्षात्कारः स्यात् आलोकसंयोगस्य पूर्वदिगवच्छेदेन सत्वान्मैवम् । यदवच्छेदेनालोकसंयोगस्तदवच्छिन्नचक्षुःसंयोगस्य हेतुत्वात् इह च तदभावात् । स्यादेतत् विशेषणता न प्रत्यासत्तिः समवायाभावयोरसत्वात् न हि तयोर्मानमस्ति अयं घटः अयं रूपवान् अयं चलतीति प्रत्यक्षमेव घटत्वरूपचलनसम्बन्धविषयकं समवाये मानम् । न हि घटादौ तेषामन्यः सम्बन्धोऽस्तीति चेन्न स्वरूपसम्बन्धस्यैवाधाराधेयभावाख्यस्य सत्वात् ।**

तथाऽपि आलोकसंयोगस्य हेतुत्वेऽपि, परस्यां पश्चिमायां, । तदसंयुक्तस्यालोकासंयुक्तस्य, परावस्थितपुरुषेण पश्चिमदिगवस्थितभित्त्यादिसन्निकृष्टपुरुषेण, । तदवच्छिन्नमिति । तथाचालोकावच्छिन्नचक्षुःसंयोगो हेतुरित्यर्थः । तदभावात् । आलोकावच्छिन्नचक्षुःसंयोगाभावात्, ननु स्वरूपसम्बन्धेनाधिकरणात्मकत्वेन च निर्वाहे समवायाभावयोर्मानाभावस्तथा च किं तद्ग्राहकप्रत्यासत्तिविचारेणेत्यभिप्रायवानाह स्यादेतदिति । तयोः समवायाभावयोः, । ननु जन्यविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डीतिविशिष्टबुद्धिवदित्यनुमाना-

त्सामान्यतो विशेषणविशेष्ययोः सम्बन्धसिद्धिः स चायं घट अयं रूपवान् अयं चलतीति जातिगुणक्रियाविशिष्टप्रत्यक्षे न संयोगो विषयः। तेषां संयोगाभावात्किं तु समवाय इत्यभिप्रायवानाह अयं घट इति । जातिगुणकर्मभेदेनोदाहरणत्रयं तेषां घटत्वरूपचलनानां, । नन्वतिरिक्तः स्वरूपसम्बन्ध एव भविष्यति किं समवायेन तर्ह्यतिरिक्तत्वसिद्धौ समवायेन किमपराद्धमित्यत आह आधाराधेयभावेति । तथा चायं घट इत्यादौ घटघटत्वयोराधाराधेयभाव एव स्वरूपसबन्धो नत्वतिरिक्त इति भावः ।

**न हि समवाय एव घटत्वस्याधारता पटादावपि सत्वात् एक एव हि घटत्वपटत्वयोः समवायः। मैवं घटे घटत्वं रूपं च समवेतं तन्तुषु पटः समवेतः । इह कर्मसमवेतमित्यनुगतसमवायाकारप्रतीत्या तत्सिद्धेः नचाभावोऽस्तु घटो नास्तीतिप्रतीत्या तत्सिद्धेः ।**

ननु समवायस्यैव तदात्मकत्वं भविष्यतीत्यत आह नहीति । पटादावपीति । तवाभिमतसमवायस्य पटादावपि सत्वेन पटे ऽपि समवायरूपघटत्वाधारतासत्वात्पटे घटत्वमिति प्रत्ययः स्यादिति भावः । न च पटे समवायरूपघटत्वाधारतायाः सत्वे ऽपि घटत्वाभावाच्च तादृशप्रत्यय इति वाच्यम्। तथा सति पटो घटत्वसम्बन्धीति प्रतीत्यापत्तः। ननु घटत्वसमवायः पटादौ नास्त्यवेत्यत आह एक एवेति । न चैवं जले गन्धवत्ताप्रतीतिः स्यादिति वाच्यम् । तत्र गन्धाभावेन तत्प्रत्ययाभावाद्गन्धाभाववत्ताज्ञानस्य प्रतिबन्धकत्वाच्च । अत्र नव्याः । समवायस्यानेकत्वमन्यथा जले गन्धसमवायस्य सत्वेन जलं गन्धसम्बन्धवदिति प्रतीतेर्दुर्वारत्वादिति । घटे घटत्वमिति । जातिगुणद्रव्यकर्मणां विशिष्टबोधे समवायस्य विषयत्वादुदाहरणचतुष्टयमपि दर्शितम्। तत्सिद्धेः सम-

वाय्यसिद्धेः, । प्रतियोग्यनुल्लेखिकार्याभावविषयकप्रतीतेरेवाभावादाह घट इति । तत्सिद्धेः अभावसिद्धेरित्यर्थः ॥

**अत्र प्रभाकराः नाभावो ऽधिकः किन्तु केवलाधिकरणस्वरूप एव अतः किं तद्ग्राहकप्रत्यासत्यन्तरकल्पनेन । ननु किमिदं कैवल्यं भूतलस्वरूपञ्चेत् सघटभूतलस्यापि तत्वापत्तिः घटाभावत्वञ्चेत्सिद्धमभावेनेति चेन्न । यत्राधिकरणे भवद्भिरभावो ऽङ्गीक्रियते तदधिकरणस्यैवाभावत्वाङ्गीकारात् । न चाभेदे आधाराधेयभावानुपपत्तिः । घटाभावे घटोनास्तीति प्रतीतेरभेदे ऽपि त्वया ऽङ्गीकारात् ।**

स्वरूप एवेत्यनन्तरं लाघवादिति शेषः । अत्रैवकारेण ज्ञानात्मकत्वं कालात्मकत्वं च व्यवच्छिद्यते ज्ञानकालयोश्च लघुत्वाभावादभावस्य च चाक्षुषत्वादिति । परैस्त्वभावस्य ज्ञानात्मकत्वे वन्यविच्छेदस्य संयोगाभावात्मकत्वेन तन्मते चेश्वरानङ्गीकारान्निर्जनवन्यविच्छेदे जलनिःसरणं न स्यादित्याहुः । अत इति । तथा चाधिकरणग्राहकसंयोगरूपप्रत्या सत्यैव निर्वाहादित्यर्थः । केवलाधिकरणस्वरूप इत्यत्र कैवल्यं किमित्याह किमिदमिति । तत्वापत्तेरिति । घटाभाव इति बुद्धिविषयत्वापत्तेरित्यर्थः । घटाभावत्वमिति । अभेदे त्वाश्रयत्वाभावादिति भावः । भवदभिमताधिकरणस्यैवाभावात्मकत्वमित्यभिप्रायेणाह यत्रेति । तथा च सघटभूतलन्न घटाभाव इति भावः । अथ तथापि भूतले घटाभाव इति प्रत्ययो न स्यादित्यत आह न चेति । अभेदे अभावस्याधिकरणाभेदे, । अभेदेऽपीति । इदमुपलक्षणं प्रमेयत्वे प्रमेयत्वमित्यपि बोध्यम् । अङ्गीकारात् । आधाराधेयभावाङ्गीकारात्, ।

**न चान्य एव घटाभावे घटाभावः अनवस्था-**

पत्तेरपसिद्धान्ताच्च । अत्रोच्यते यदि भूतलविशेषो घटाभावस्तदा भूतले घटाभाव इत्येवमाधारताप्रत्ययो न स्यात् न हि भूतलं भूतलाधिकरणं भूतले भूतलमिति प्रतीत्यापत्तेः । किं च यत्रेदानीं घट आनीस्तदधिकरणं घटाभावो न वा आद्ये इदानीं घटो नास्तीति प्रतीतिः स्यात् ।

नन्वभावाधिकरणको ऽभावोऽतिरिक्त इत्यभिप्रायवानाह न चान्य इति । अनवस्थापत्तेरिति । घटाभावाभावनिष्ठाभावस्याप्यधिकत्वमेवं चेत्येत्यर्थः । ननु भेदो ऽतिरिक्तस्तद्भेदोऽप्यतिरिक्त इतिवत्प्रामाणिकी अनवस्था न दोषायेत्यत आह अपसिद्धान्ताच्चेति । अभावाधिकरणकाभावस्यातिरिक्तत्वाभाव इति सिद्धान्त इत्यर्थः । भूतलविशेषः घटशून्यभूतलविशेषः,। आधारता भूतलस्याधारता, प्रत्ययाभावे बीजमाह नहीति स्वस्मिन् स्वाधिकरणत्वे ऽनिष्टमप्याह भूतल इति । ननु तादात्म्यसम्बन्धेनाभावस्यल एवाभावस्याधाराधेयभावप्रतीतिनियामकत्वं न तु विशेषणतासम्बन्धेनान्यथाघटाभावे पटाभावतादात्म्यस्य सत्वात् घटाभावस्य पटाभावात्मकत्वेन पटाभाववद्घटवति भूतले ऽपि घटो नास्तीति प्रतीत्यापत्तेस्तथा चात्र घटाभावतादात्म्यस्य पटाभाव एव सत्वात्तादात्म्यसम्बन्धेन घटाभावस्य भूतलवृत्तित्वाभावाद्भूतले नाधाराधेयभावबोध इत्यस्वरसादाह किं चेति । यत्र घटशून्यभूतले, इदानीं तत्कालावच्छेदेन, । एवमग्रेऽपि । न वा घटाभावभिन्नं वा, । प्रत्ययः स्यादिति । यदेव घटानयनात्पूर्वकालीनं घटशून्ये घटाभावप्रत्ययजनकं तदेव घटे आनीते ऽपीति घटो नास्तीति प्रत्ययजनकं स्यादित्यर्थः ।

अन्त्ये ऽन्यदापि घटो नास्तीति प्रत्ययो न स्यात् । किञ्च कपाले घटो भविष्यति घटो नष्ट

**इति प्रतीतिरस्ति कपाले पूर्वं घटप्रागभावः उत्तर काले घटध्वंसः स यदि कपालात्मा तदा सर्वदा तत्प्रतीतिः स्यात्कपालस्य सत्वात् । अन्यथा कपालप्रतीतिरपि न स्यात् ।**

अन्त्ये घटानयनकालीनभूतलस्य घटाभावभिन्नत्वे, । अन्यदापि घटस्यापसरणकालेपि, । प्रत्ययो न स्यादिति । घटस्यानयनकालीनं यदेव भूतलं तदेव भूतलं घटस्यापसरणकाले ऽपीति घटस्यापसरणकाले ऽपि घटो नास्तीति प्रत्ययो न स्यादित्यर्थः । ननु यदा घटः समानीतस्तदा घटवत्ताज्ञानस्य प्रतिबन्धकत्वान्न तद्बुत्ताबुद्धिः यदा तु घटो नीतस्तदा तु घटाभाववत्ताबुद्धौ किं बाधकमित्यस्वरसादाह किं चेति । घटो भविष्यतीति । अयमर्थः । कपाले घटोत्पत्तेः पूर्वं घटो भविष्यतीति प्रतीतिसिद्धः कश्चिद्घटाभावः प्रतीयते स एव घटप्रागभावः । अत एवोत्पत्तेः प्राक्काले कार्याभावः प्रागभाव इति सङ्गच्छते । एवं घटोत्पत्त्यनन्तरं कपाले घटो नष्ट इति तीतिसिद्धो ऽभाव उत्पद्यते स एव च ध्वंसः । अत एवोत्पत्तिमानभावो ध्वंस इति । नन्वेतावता ध्वंसप्रागभावौ सिद्धौ परं तु तौ प्रतियोगिसमवायिकारणरूपाधिकरणस्वरूपावेत्यत आह स यदीति । सर्वदा घटकाले घटान्यकाले च तत्प्रतीति प्रागभावध्वंसयोः प्रतीतिः, कुतः इत्यत आह कपालस्येति । घटकाले घटान्यकाले च प्रागभावध्वंसात्मक कपालस्य सत्वादित्यर्थः । अन्यथा कपालस्यासत्वे, ।

**किञ्च मोक्षो दुःखाभावः आत्मरूपः स्यात् तथा चासाध्यतापत्तिर्नित्यत्वादिति संक्षेपः ।**

ननु यत्कालावच्छेदेन प्रागभावध्वंसयोः प्रत्येकं कपालवृत्तित्वं तत्कालावच्छेदेन प्रत्येकं तयोः कपालात्मकत्वमिति नोक्तदोष इत्यत

प्राह किं चेति । दुःखाभाव इति । स्वसमानाधिकरणदुःखप्रागभावा- समानकालीनं यद्दुःखं तस्य ध्वंसरूपाभाव इत्यर्थः ॥ विवेचितं चेदम- ग्रस्तात् । तथा च ध्वसप्रागभावयोः प्रतियोगिसमवायिदेश एवाधिक- रणत्वनियमेन तादृशदुःखध्वंसाधिकरणमात्मैवेति दुःखध्वंसस्यात्मस्वरू- पत्वं स्यादित्यर्थः । तथा च किमनिष्टमत आह तथा चेति । असाध्य- त्वापत्तिः । अहेतुकत्वापत्तिः तथा च तत्वज्ञानाय केऽपि न प्रवर्त्तेरन्नि- त्यर्थः । तादृशदुःखाभावस्यात्मस्वरूपत्वे कथमसाध्यत्वमत आह नित्य- त्वादिति ॥ अत्र रूपरसाद्यभावानां वाय्वधिकरणत्वाद्वायुवत्तेषामप्यप्रत्य- क्षत्वं स्यात् । नानाधिकरणात्मकत्वकल्पनापेक्षया तिरिक्ताभावकल्पने लाघवात्तद्गुणाभावानान्तत्तदिन्द्रियग्राह्यत्वेन तेषामधिकरणात्मकत्वे च तत्तदिन्द्रियग्राह्यता न स्यादिति संक्षेपार्थो बोध्य इति ।

**स्यादेतत् एवं घटाभावो नास्तीति प्रतीत्या घटाभावाभावोप्यधिकः स्यात् स्यादेवेति चेत्तर्हि तदभावोप्यधिकःस्यादित्यनवस्था । केवलाधिकरणं तदभाव इति चेत्तर्हि सर्वत्र स एवाभावो ऽस्तु भवदुक्तदूषणगणप्रसङ्गश्चैवं स्यात् । अत्राहुः घटा- भावाभावो घट एव तत्सत्वे घटाभावो नास्तीति प्रतीतेः न च केवलाधिकरणरूपः उक्तयुक्तेरिति स- म्प्रदायः ॥**

एवं अभावस्याधिकरणभिन्नत्वे सिद्धे, । पटाभाव इति । यथा- ऽभावस्याधिकरणभिन्नत्वं तथा ऽभावाभावस्यापि प्रतियोगिभिन्नत्व- मिति भावः । तर्हि अभावाभावस्यातिरिक्तत्वे, । तदभावोऽपि । अभा- वाभावो, ऽपि इत्यनवस्था एवंरीत्यानवस्था, । तदभावः अभावा- भावः, । तर्हि अभावाभावस्याधिकरणात्मकत्वे, सर्वत्राभावस्थले ऽभा-

त्मत्वे तदभावस्यत्ते च । स एव अधिकरणात्मक एव, । नन्वन
वस्थाभियेत्या ऽधिकरणात्मकत्वमेवोच्यतामित्यत आह भवदुक्तेति
आधाराधेयभावप्रत्ययानुपपत्तिरित्यादिदूषणसमूहप्रसङ्गः स्यादित्यर्थः घ
टवेति । अत्रैवकारेणाधिकरणातिरिक्तत्वयोर्व्यवच्छेदः । तत्सत्त्व इति
अत्रैवकारो ऽनुषज्यते । तथा च तत्सत्त्व एव घटसत्त्व एव, यदि घटाभ
वाभावोऽतिरिक्तस्तर्हि घट विना ऽपि घटाभावो नास्तीति प्रत्ययः स्य
दिति भावः । न च घटसमनियतोयमतिरिक्तो ऽभाव इति वाच्यम् । तस
लाघवाद्घटात्मकत्वस्वीकारादिति । एवं च घटाभावाभावो यदि
घटात्मकस्तदा तदभावो ऽपि घटाभावात्मक इति बोध्यम् । ननु विनिग
मनाविरहादधिकरणात्मत्वमेवोच्यतामित्यत आह न केवलेति । उक्त
दुक्तेः आधाराधेयभावानुपपत्तिरूपोक्तयुक्तेः, । अत्रानन्ताधिकरणानामभा
वत्वकल्पने गौरवमित्यादिः संक्षेपार्थो बोध्य इति ।

नव्यास्तु घटाभावाभावोप्यधिक एव अभावत्वेन प्रतीतेः न चायं भ्रमः बाधकाभावात् तदभावस्तु घटाभाव एव नाधिक इति नानवस्थानमित्याहुः स्यादेतत् भूतलं घटभेदभिन्नं न वा अन्त्ये आयातं भूतलमेव घटभेद इत्यनेन । आद्ये तद्भेदभेदोप्यधिकः स्यात् स्यादेवेति चेत्तर्हि तद्भेदोप्यधिकः स्यादित्यनवस्था ।

ननु लाघवाद्घटात्मक एव भविष्यतीत्यत आह अभावत्वेनेति । अभावत्वमखण्डोपाधिः द्रव्यादिषट्कान्योन्याभाववत्त्वं वा तथा च घटाभावोनास्तीतिप्रतीति विषयो न घटः घटस्य भावभिन्नत्वाभावादिति । अयं अभावत्वेन प्रतीतिरूपः, । बाधकाभावात् विषयबाधरूपबाधकाभावात्, । तदभावस्तु घटाभावाभावाभावस्तु, । नानवस्थानमिति । तथा च घटाभावस्य घटाभावाभावस्याभावत्वे बाधकाभावा-

दिति भावः । अथात्यन्ताभावाभावस्यातिरिक्तत्वं व्यवस्थाप्यान्योन्याभावाभावादेरतिरिक्तत्वं व्यवस्थापयितुं भूमिकामारचयति, स्यादेतदित्यादित्याना । सूचीकटाहन्यायेनाह अन्त्य इति । भूतलमेवेत्यत्रैवकारः संपातायातः । तद्भेदो ऽपि । घटभेदभेदो ऽपि । तर्हि भेदभेदस्यातिरिक्तत्वे, । तद्भेदो ऽपि । भेदभेदभेदो ऽपि, ।

अथानस्थाभयाद्भेदभेदो नाधिकः किन्त्वधिकरणरूप इति चेन्न भवदुक्तदूषणगणप्रसङ्गश्चैवं स्यात् अत्राहुः भेदभेदो प्यधिक एव । न चैवं तद्भेदो प्यधिकः स्यादिष्टत्वात् न चेयमनस्थादोषाय प्रामाणिकत्वात् तदाहुः सर्वतो बलवती ह्यन्यथानुपपत्तिरिति संक्षेपः । सचायमभावो द्वेधा अन्योन्याभावः संसर्गाभावश्च तत्रेदमिदं न भवति इदमेतद्भिन्नमिति प्रतीतिसाक्षिको ऽभावो ऽन्योन्याभावः । यदिदमाहुः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताको ऽभाव इति ।

एवं भेदभेदस्याधिकत्वे, । अन्यथा ऽनुपपत्तिरिति । अत्रान्यथानुपपत्तिरेव । तथा हि । यथाघटाभावाभावस्याभावो घटात्यन्ताभावस्वरूपः । तथा घटभेदभेदस्यभेदो न घटभेदस्वरूपस्तस्य घटभेदातिरिक्ते घटादौ सर्वत्र वृत्तित्वाद्घटो घटभिन्न इति प्रत्ययः स्यादिति संक्षेपार्थो प्ययमेव । अयमधिकरणाभिन्नतया सिद्धः, अन्योन्याभावे मानमाह तत्रेति । तत्र द्विविधाभावमध्ये, इदं शरीरादिकं इदं न भवति आत्मस्वरूपं न भवतीति शरीरतादात्म्यावच्छिन्नाभावो बुध्यते इदं शरीरादिकमेद्तभिन्न आत्मस्वरूपाद्भिन्नमित्यत्र शरीरतादात्म्यसम्बन्धावच्छिन्नभेदो बुध्यते स एवान्योन्याभाव इति ॥

तदन्यो ऽभावः संसर्गाभाव इति । सो ऽपि

त्रिविधः अत्यन्ताभावप्रागभावध्वंसाभावभेदात तत्र-नास्तीत्यनुभवसिद्धो नित्यः संसर्गाभावो ऽत्यन्ताभावः विनष्ट इति प्रतीतिसाक्षिक उत्पत्तिमानभावोध्वंसः स च न विनाशी तद्विनाशकल्पनायां मानाभावात् न हि विनाशो विनष्ट इति कश्चित्प्रत्येति तत्प्रागभावश्च घटादिरूपः प्रतियोगी तत्प्रागभावश्च उभयत्र ध्वंसो भविष्यतीति प्रत्ययाद्विनाश्यभावः प्रागभावः ।

तदन्य इति । तदन्यः अन्योन्याभावान्यः, । तथा चान्योन्याभावाभिन्नाभावत्वं संसर्गाभावत्वमिति । ससर्गाभावे ऽन्योन्याभावभेदस्य सत्वादभावप्रयियोगिकाभावाधिकरणकाभावस्याधिकरणात्मकत्वेनान्योन्याभावभेदस्य संसर्गाभावात्मकत्वमिति ध्वनितं । अत एवान्योन्याभावस्यान्योन्याभावः संसर्गाभावस्वरूप इति पदार्थखण्डने शिरोमणिचरणाः । सो ऽपि संसर्गाभावो ऽपि, तत्र प्रमाणप्रदर्शनपूर्वकमत्यन्ताभावलक्षणमाह नित्य इति । प्रागभावध्वंसयोर्वारणाय नित्य इति । तथैवध्वंसलक्षणमाह उत्पत्तीति । प्रागभाववारणायोत्पत्तिमानिति । स च ध्वंसश्च, । प्रमाणाभावादिति न च ध्वंसो विनाशी जन्यत्वादित्यनुमानमेव मानमिति वाच्यम् । तत्र भावत्वस्योपाधित्वात् । ननु प्रत्यक्षमेव मानं भविष्यतीत्यत आह न हीति । तत्प्रागभावः ध्वंसस्य प्रागभावः, । तत्प्रागभावश्च प्रतियोगिप्रागभावश्च । तथा च ध्वंसस्य द्वयं प्रतियोगि प्रतियोगी प्रागभावश्चेत्यर्थः । तत्र मानमाह उभयत्रेति । उभयत्र उभयकाले, तथा च घटकाले घटप्रागभावकाले च कपाले घटध्वंसो भविष्यतीति प्रत्ययेन घटध्वंसप्रतियोगिकप्रागभावस्य विषयीकरणात्तस्य च घटात्मकत्वघटप्रागभावात्मकत्वस्वीकारः । तत्र कपाले तत्प्रागभावयोः सत्वादित्यर्थः । ध्वंसादावतिव्याप्तिवारणाय विनाशीति ।

## स च भविष्यतीत्यनुभवसाक्षिको दुरपन्हवः ।

ननु प्रागभावे मानाभावः । न च घटादेरुत्पत्तिक्षणे निखिलसामग्रीसत्वादुत्पत्त्यनन्तरं द्वितीयक्षणे पुनरुत्पत्तिः स्यात् प्रागभावस्वीकारे तु तदुत्पत्त्यनन्तरन्तस्य प्रागभावाभावादेव न तदुत्पत्तिरिति वाच्यम् । कपालान्तरे घटप्रागभावस्य सत्वाद्घटान्तरोत्पत्तौ बाधकाभावात् । किञ्च । जन्यरूपत्वावच्छिन्नं प्रति समवायावच्छिन्नरूपत्वेन प्रतिबध्यप्रतिबन्धकभावमिव द्रव्यत्वेन द्रव्यत्वेन प्रतिबध्यप्रतिबन्धकभावस्यावश्यकत्वम् । इत्यञ्च कपाले जन्यद्रव्यस्य घटस्य सत्वान्न घटान्तरोत्पत्तिः । न च तथाप्युत्पन्नज्ञानादेः पुनरुत्पत्तिः स्यादिति वाच्यम् तज्ज्ञानं प्रति तदुत्पत्तेरेव प्रतिबन्धकत्वादित्यत आह भविष्यतीति । तथा च घटाद्यनुत्पत्तिदशायां कपालादौ घटो भविष्यतीत्यादिशब्दाभिलप्यमानाभावविषयकज्ञानस्य ध्वंसादेरविषयत्वात्प्रागभावविषयत्वमित्यर्थः । इदमुपलक्षणं । घटानुत्पत्तिदशाया कपाले इदानीं घटो नास्ति इदानीं घटप्रागभाव इति प्रत्यक्षस्य घटप्रागभावमात्रविषयत्वादित्यपि बोध्यम् । अत्र भविष्यत्व वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं न तु वर्त्तमानप्रतियोगित्वमात्रम् । श्वो भाविनि घटे ऽपि तादृशप्रतियोगित्वस्य सत्वात्तत्राद्य भविष्यतीति प्रत्ययापत्तेः । तथा हि अत्र प्रतियोगित्व प्रागभावश्च धात्वर्थः । वर्त्तमानत्वमाश्रयत्वं च प्रत्ययार्थः । वर्त्तमानत्व च प्रागभावे ऽन्वेति । प्रागभावश्च निरूपितत्वसम्बन्धेन विशेषणतया प्रतियोगित्वे प्रतियोगित्वं चाश्रयतया घटे एवं च घटो भविष्यतीत्यत्र वर्त्तमानप्रागभावनिरूपितप्रतियोगित्वाश्रयो घट इति बोधः । मन्मते तु धात्वर्थः । प्रतियोग्युत्पत्तिः तत्र च वर्त्तमानत्वान्वयः । तथा च वर्त्तमाना या प्रागभावप्रतियोग्युत्पत्तिस्तत्कत्वस्य भावि घटे ऽभावान्न तत्र तादृशप्रत्ययापत्तिरित्यर्थः । प्रागभावानङ्गीकारे तु वर्त्तमानकालोत्तरक्षणोत्पत्तिकत्वरूपं भविष्यत्व वाच्यम् । अत्र वर्त्तमानकालोत्तरत्व यत्क्षणे शब्दः प्रयुक्तस्तत्क्षणध्वंसाधिकरणत्व तथा चाद्य भविष्यतीत्यत्राद्यात्मककालप्रविष्टा एव

क्षणास्त एव वर्तमानक्षणास्त एव ध्वंसाधिकरणा न तु तदधिकरणं महाकालः । एवं च तदन्तर्गतक्षणोत्पत्तिकत्वस्य श्वो भाविनि घटेऽभावान्न दोषः । भविष्यत्वघटितपदार्थज्ञानं त्वनुमानादिनेति । न चैवं घटानुत्पत्तिदशायां कथं कपाले घटो नास्तीति प्रत्यय इति वाच्यम् । सामयिकाभावस्यैव तत्प्रतीतिविषयत्वात् । सामयिकत्वं च किञ्चित्समयावच्छिन्नवृत्तिकत्वं । अथात्यन्ताभावस्य कथं प्रतियोगिसमवायिदेशवृत्तित्वमिति चेन्न । घटानुत्पत्तिदशायां घटनाशदशायां चेह कपाले घटो नास्तीति प्रतीतिः । न चेयं यत्किञ्चित्प्रतियोगिकाभावविषया येन प्रागभावध्वंसौ तत्प्रतीतिविषयौ स्यातां तयोर्घटत्वावच्छिन्नप्रतियोगिकत्वाभावात् । किं तु तत्तद्घटत्वावच्छिन्नप्रतियोगिताकत्वम् । अन्यथा घटवत्यपि घटो नास्तीति प्रत्ययापत्तेः । तयोर्घटत्वावच्छिन्नप्रतियोगिताकत्वं कुतो नेति चेत् । पूर्वं केषां चिद्घटानां नाशात्तत्प्रागभावानां कपालेऽभावात्केषां चिदुत्पत्स्यमानत्वात्तध्वंसानां कपालेऽभावाच्च ध्वंसप्रागभावयोर्घटत्वावच्छिन्नत्वाभावात् । एवं तत्तत्कपाले तत्तद्घटोत्पत्तिविनाशयोः सत्वात्तत्तद्घटत्वावच्छिन्नप्रतियोगिताकप्रागभावध्वंसौ वाच्यौ न तु घटत्वावच्छिन्नप्रतियोगिताकौ अन्यथा घटत्वावच्छिन्ननिखिलघटानामेकस्मिन्कपाले प्रागभावविनाशौ स्यातामिति संक्षेपः ।

**तस्य च ध्वंसः प्रतियोगी तद्ध्वंसश्चोभयत्र विनष्टः प्रागभाव इति प्रतीतेः । अत्यन्ताभावोऽन्योन्याभावश्च नित्यौ । नित्यश्चाभावो द्विविधः एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकोऽन्यश्च । न चान्त्ये मानाभावः । घटवति घटपटौ न स्तः घटो न घटपटौ एकघटवति न घटौ एको न द्वाविति प्रतीतेः एकघटवति द्वित्वावच्छिन्नतदत्यन्ताभावस्य एकस्मिन्नुभयान्योन्याभावस्य च सत्वात् । न च प्रतियोगि-**

**मति कथन्तदत्यन्ताभावस्तयोर्विरोधादिति वाच्यम् । प्रतियोगितावच्छेदकावच्छिन्नेनैवाभावस्य विरोधात् ।**

तस्य प्रागभावस्य तद्ध्वंसश्च प्रतियोगिध्वंसश्च, तथा च प्रागभावस्य ध्वंसद्वयं । प्रतियोगी प्रतियोगि ध्वंसश्चेत्यर्थः । उभयत्र ध्वंसप्रतियोग्यवच्छिन्नकपाले प्रतियोगिध्वंसावच्छिन्नकपाले च । अत्र शिरोमणिचरणाः ध्वंसस्य प्रागभावोऽतिरिक्तः प्रागभावस्य ध्वंसश्चातिरिक्तः घटवति काले घटध्वंसो नास्ति घटो नास्तीति प्रतीतेरभावत्वेनाभावविषयकत्वं न तु घटविषयकत्वमित्याहुः । अन्यः । उभयत्वावच्छिन्नप्रतियोगिताकः, । ननूभयत्वमेकविशिष्टापरत्वमिति । तदवच्छिन्नाभावस्यैकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिकत्वात्कथं द्वैविध्यमुक्तमित्याशयवानाह न चेति । अन्त्ये । उभयत्वावच्छिन्नप्रतियोगिताकाभावे, । उभयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावे मानमाह घटवतीति । तादृशान्योन्याभावे मानमाह । घटो नेति । ननु घटवति घटपटौ नस्तः घटो न घटपटावोदृशप्रतीत्योः पटत्वावच्छिन्नात्यन्तान्योन्याभावौ विषयाविति नोभयत्वावच्छिन्नप्रतियोगिताकाभावसिद्धिरित्यत आह एकघटवतीत्यादि । तदत्यन्ताभावस्य घटात्यन्ताभावस्य, । न च विशिष्टाभावेनान्यथासिद्धिरिति वाच्यम् । वैशिष्ट्यविरहे ऽपि घटत्ववति घटत्वपटत्वोभयन्नास्तीति प्रतीतेः । ननु तथा ऽपि घटवति घटौ नस्त इत्याद्यसङ्गतमित्याह न चेति । तदभावः प्रतियभावः, । तयोः । अभावप्रतियोगिनोः, । प्रतियोगितेति । घटद्वयवति घटद्वये वा द्वित्वरूपप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यान्योन्याभावस्य चासत्त्वादित्यर्थः । नन्विदमसङ्गत घटत्वेन पटो नास्तीति प्रतीतेर्व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य घटत्वावच्छिन्नपटाभावस्य घटवति सत्त्वादिति चेन्न । अभावप्रत्यक्षत्वावच्छिन्नं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वेन प्रतियोग्यवर्त्तिधर्मस्य योगितावच्छेदकत्वाभावात् । इतरथा घटनिर्विकल्पकादपि घटो नास्तीति प्रतीतिः स्यादिति संक्षेपः ।

न चैको द्वित्वावच्छिन्नः एको द्वावित्यप्रतीतेः । अत एव दण्डिपुरुषाद्दण्डे ऽपनीते पुरुषे सत्यपि दण्डीपुरुषो नास्तीति बलाद्विशिष्टाभावो विशेषणावच्छिन्नविशेष्याभावो ऽभ्युपेयते न चेयं दण्डाभावविषया दण्डवत्यपि तथाप्रतीतेः न वा पुरुषाभावविषया तस्य सत्वात् तस्माद्यत्र विशेषणाभावो विशेष्याभाव उभयाभावो वा तत्र विशिष्टाभावो ऽधिको ऽवसेयः ।

ननूभयाभावप्रतियोगी एको पीत्युभयत्वावच्छिन्नत्वमेकस्यापि भविष्यतीत्यत आह न चेति कुतो नेत्यत आह एक इति । यथा द्वयोर्द्वित्वावच्छिन्नत्वे द्वौ इति प्रत्ययस्तथैकस्यापि द्वित्वावच्छिन्नत्वे एको द्वाविति प्रत्ययः स्यादित्यर्थः । विशिष्टाभावस्याप्यतिरिक्तत्वं साधयति अत एवेत्यादिना । अत एव एकस्य द्वित्वानवच्छिन्नत्वादेव, । यथैकस्य द्वित्वानवच्छिन्नत्वं तथाविशिष्टधर्मानवच्छिन्नत्वं शुद्धस्येत्यर्थः । अपनीते विशेषणे तद्दण्डावच्छिन्नपुरुषाभाव इत्यर्थः । इयं दण्डी नास्तीति प्रतीतिः, । तस्येति । यत्र सति पुरुषे दण्डीपुरुषो नास्तीतिधीस्तत्र पुरुषस्य सत्वादित्यर्थः । विशिष्टाभावो दण्डविशिष्टपुरुषाद्यभावः । तथा च क्वचिद्विशेषणाभावप्रयुक्तः क्वचिद्विशेष्याभावप्रयुक्तः क्वचिदुभयाभावप्रयुक्तो विशिष्टाभावो ऽतिरिक्तो बोद्धव्य इत्यर्थः ॥

भट्टास्त्वभावो नेन्द्रियग्राह्यः क्लृप्तसन्निकर्षाणामभावात्किन्त्वनुपलब्धिप्रमाणगम्य इत्याहुस्तन्न । प्रमाणान्तरकल्पनातः सन्निकर्षान्तरकल्पनाया लघुत्वाद् अन्यथा संयोगादीनां क्लृप्तानां सन्निकर्षाणामभावाच्छब्दे ऽपि प्रमाणान्तरकल्पनापत्तेः ।

ननु संयोगादिरूपक्लृप्तसन्निकर्षाभावात्कथमभावप्रत्यक्षं विशेषणताया अभावग्राहकत्वे तु घटवति घटात्यन्ताभावग्रहापत्तिः । चक्षुःसंयुक्तविशेषणताया घटात्यन्ताभावस्य च घटवद्भूतलादौ सत्वादतो योग्यानुपलब्धिरूपप्रमाणान्तरमवश्यम्वाच्यमिति भट्टमतमाह भट्टास्त्विति । अनुपलब्धीति । योग्यानुपलब्धीत्यर्थः । विवेचनीयं चेदमनुपदं । सन्निकर्षान्तरकल्पनाया विशेषणतारूपसन्निकर्षान्तरकल्पनाया, लघुत्वादिति । प्रमाणान्तरकल्पनायामपि सन्निकर्षकल्पनाया आवश्यकत्वादिति । ननु संयोगादेरेव सन्निकर्षत्वं नत्वन्यस्येत्यत आह अन्यथेति । अन्यथा संयोगाद्यतिरिक्तस्य सन्निकर्षत्वाभावे, शब्दे ऽपि शब्दग्रहे ऽपि, । समवायस्य तव मते ऽभावादिति भावः ।

तत्र शब्दं साक्षात्करोमीति प्रतीतेः प्रत्यक्ष एवायमिति चेत्, इहापि पश्यामि घटाभावमिति प्रतीतेः अध्यक्ष एव स इति तुल्यं । किं चानुपलब्धेः प्रमाजननव्यापाराभावात्कथं प्रमाकरणत्वं, व्यापारवद्धि कारणं करणमित्युक्तं, नन्वेवं घटाभाववति घटोपलम्भे ऽपि घटाभावप्रत्ययः स्याद् इन्द्रियसम्बद्धविशेषणतायाः सत्वादिति चेन्न, योग्यानुपलब्धेरप्यभावग्रहे हेतुत्वात् । अथ केयं योग्यानुपलब्धिः । योग्यस्य प्रतियोगिनो नुपलब्धिः सहकारिणीति मतं, तन्न जलपरमाणौ पृथिवीत्वाभावग्रहापत्तेः । भवति हि पृथिवीत्वं चक्षुर्योग्यं तदनुपलब्धिश्च जलपरमाणौ । स्तम्भे पिशाचभेदग्रहानुपपत्तेश्च पिशाचस्य प्रतियोगिनो ऽयोग्यत्वात् ।

ननु शब्दं साक्षात्करोमीति प्रत्यक्षविषयकानुव्यवसायवत्त्वाच्छब्द-

ग्रहे श्रोत्रेन्द्रियेणैव निर्वाहादित्याह तत्रेति तत्र शब्दग्रहे, प्रत्यक्ष एवा-
र्थमिति । अयं शब्दः, । अत्रैवकारेण शब्दग्रहे प्रत्यक्षातिरिक्तप्रमाणान्त-
व्यवच्छेदः । तथा च शब्दग्रहे श्रोत्रावच्छिन्नसमवायस्य हेतुत्वान्यथा-
नुपपत्त्या समवायस्य स्वीकार इति भावः । इहापि अभावग्रहे ऽपि, -
ननु घटाभावग्राहकसन्निकर्षाभावेन घटाभावप्रत्यक्षरूपविषयस्य बाधाद्
घटाभावं पश्यामीति प्रतीतेर्भ्रमत्वमित्यतो दोषान्तरमाह किञ्चेति ।
व्यापाराभावादिति । विशेषणताया अस्वीकारादिति भावः । इत्थं
मतिरिक्तप्रमाणकल्पनमावश्यकं । सन्निकर्षस्तु विशेषणतैवेति तेनैव निर्वा-
होऽस्तु किमतिरिक्तप्रमाणेनेति मीमांसकः शङ्कते नन्विति । एवं विशे-
षणतायाः प्रत्यासत्तित्वस्वीकारे, । योग्येति तथा च तत्र योग्यानुपलब्ध्य
भावान्न घटाभावप्रत्यक्षमिति भावः । इयं अभावग्रहहेतुभूता, । योग्य-
येति । अभावप्रत्यक्षे प्रतियोगिनोऽनुपलब्धिः कारणमित्युक्ते तु पिशाचा-
त्यन्ताभावप्रत्यक्षं स्यादत उक्तं योग्यस्येति । अभावग्रहदशायां योग्यस्या-
धिकरणादेरुपलब्धिसत्वात्प्रतियोगिन इत्युक्तम् । सहकारिणी सन्निकर्षस्य
सहकारिणी, । ननु महत्वोद्भूतरूपवद्विशेषणतारूपसन्निकर्षाभावादेव न
पृथिवीत्वाभावग्रह इत्यतो दोषान्तरमाह स्तम्भ इति । पिशाचात्यन्ता
भावस्तु न प्रत्यक्षः पिशाचान्योन्याभावस्तु प्रत्यक्षस्तत्र पिशाचरूपप्रतियो-
गिनो योग्यत्वाभावात्तदन्योन्यभावप्रत्यक्षं न स्यादित्यर्थः ॥

अथ योग्ये ऽधिकरणे प्रतियोगिनो ऽनुपल-
ब्धिः सहकारिणीति चेन्न, भूतले पिशाचात्यन्ताभाव-
ग्रहापत्तेः । यत्वत्यन्ताभावप्रत्यक्षे योग्यप्रतियो-
ग्यनुपलब्धिरन्योन्याभावग्रहे च योग्ये ऽधिकरणे
प्रतियोगितादात्म्यानुपलब्धिः सहकारिणीति मतं,
तन्न जलपरमाणौ पृथिवीत्वात्यन्ताभावग्रहापत्तेर्वा-
यावुद्भूतरूपवद्भेदग्रहानापत्तेश्च, न चेष्टापत्तिः

**अनुभवविरोधाद् अत्रोच्यते, योग्या सहकारिसंपन्ना-नुपलब्धिः कारणम् ।**

ननु योग्यानुपलब्धिरित्यत्र योग्यत्वमधिकरणविशेषणमित्याह योग्येति । तथा च स्तम्भरूपाधिकरणस्य योग्यत्वात्पिशाचभेदप्रत्यक्षे बाधकाभावादिति भावः । अत्यन्तान्योन्याभावप्रत्यक्षयोः सामर्थं भेदमाह यत्त्विति । तथा चात्यन्ताभावग्रहे प्रतियोगियोग्यत्वं तन्त्रं अन्योन्याभावग्रहे चाधिकरणयोग्यत्वं तन्त्रमित्यर्थः । प्रतियोगितादात्म्येति । अन्योन्याभावस्य तादात्म्यसम्बन्धप्रतियोगिताविच्छेदकत्वाद् अन्योन्याभावग्रहे प्रतियोगितादात्म्यानुपलब्धिरपेक्षितेत्यर्थः । जन्येति स्वाश्रयसमवायेन मनस्त्वाभावान्न पृथिवीत्वाभावप्रत्यक्षं तथापि घटादौ मनस्त्वात्यन्ताभावादेरप्रत्यक्षतापत्तिस्तस्यायोग्यत्वादिति । इदमुपलक्षणं संसर्गाभावग्रहे यत्किञ्चित्प्रतियोगियोग्यत्वं यावत्प्रतियोगियोग्यत्वं वा । आद्ये घटादिरूपयत्किञ्चित्प्रतियोगियोग्यत्वान्मूर्त्तसामान्याभावप्रत्यक्षप्रसङ्गात् । अन्त्ये च परमाणुरूपस्यायोग्यत्वेन महति वायावुद्भूतरूपसामान्याभावस्य प्रत्यक्षतानापत्तेः । अन्योन्याभावस्याधिकरणयोग्यत्वस्य तन्त्रत्वे बाधकमाह वा यावितिं । अनुभवविरोधात् । वायुरुद्भूतरूपवान्नेत्यनुभवविरोधात् । प्रतियोगिव्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधाने सति प्रतियोग्यनुपलब्धिरूपामाचार्याणां योग्यानुपलब्धिं मनसि निधाय समाधत्ते अत्रोच्यत इति । योग्यानुपलब्धिरित्यत्र योग्यपदार्थमाह सहकारिसम्पन्नेति । प्रतियोगिप्रतियोगिव्याप्येतरयावत्प्रतियोग्युपलम्भकरूपसहकारिसहिता प्रतियोगिनो ऽनुपलब्धिरित्यर्थः न च पिशाचस्यायोग्यत्वात्तदुपलम्भकसामग्र्यभावात्पिशाचभेदप्रत्यक्षं न स्यादिति वाच्यम् । एतद्योग्यतायाः संसर्गाभावग्रहे हेतुत्वात् । अन्यान्याभावप्रत्यक्षे त्वधिकरणयोग्यताया अपेक्षितत्वात् । अनुपलब्धिः प्रतियोग्यनुपलब्धिः, । अभावग्रहदशायां प्रतियोगिप्रतियोगिव्याप्ययोरभावेन यावत्प्रतियोगिग्राहकसमवधानाभावादसम्भववारणाय

प्रतियोगिप्रतियोगिव्याप्येतरेत्युक्तं । अत्र प्रतियोगिव्याप्यं तु प्रतियोग्युपलम्भासाधारणकारणं बोध्यम् तच्च प्रतियोगीन्द्रियसन्निकर्षादि ॥

**अत एवान्धकारे न घटाभावश्चक्षुषा । तत्रालोकाधिकरणसन्निकर्षस्यापि हेतुत्वात्, न वा जलपरमाणौ पृथिवीत्वाभावग्रहो योग्यसन्निकर्षाभावात् । कः सन्निकर्षो योग्यः पृथिवीत्वाभावग्राहक इति, चेत् इन्द्रियसन्निकृष्टमहदुद्भूतरूपवद्विशेषणता । उद्भूतरूपाभावे तु इन्द्रियसन्निकृष्टमहत्ववद्विशेषता योग्यः सन्निकर्षः । अतो मनसि न तद्ग्रहः स्याद् भवति च महति वायौ । एवमन्यत्रापि सन्निकर्षा योग्याः कार्यवशादुन्नेयाः ॥**

अत एव ईदृशयोग्यानुपलब्धेर्विवक्षणादेव, । अन्धकारे त्वचा घटाभावग्रहे बाधकाभावाच्चक्षुषेत्युक्तम् । तत्र घटाभावग्रहे, अथ वा तत्र घटग्रहे आलोकस्य हेतुत्वाद् घटाभावग्रहेऽपि तस्य हेतुत्वमिति भावः । यद्यपि निरुक्तयोग्यानुपलब्ध्यभावाच्च जलपरमाणौ पृथिवीत्वाभावग्रह इति समाधातुं शक्यं तथापि कृप्तसन्निकर्षाभावादेव न पृथिवीत्वाभावग्रह इति समाधत्ते न वेति । उद्भूतरूपाभावेत्विति उद्भूतरूपत्वावच्छिन्नप्रतियोगिताकाभावप्रत्यक्ष इत्यर्थः । तत्रोद्भूतरूपमपि न प्रयोजकमिति भावः । अनुद्भूतरूपाभावस्यातीन्द्रियत्वज्ञानायोद्भूतेत्युक्तम् । अत इति । तादृशसन्निकृष्टमहत्ववद्विशेषणताया योग्यसन्निकर्षत्वादित्यर्थः । न तद्ग्रहः नोद्भूतरूपाभावग्रहः, । उद्भूतरूपपरित्यागे बीजमाह भवतिचेति महति वायौ उद्भूतरूपाभावप्रत्यक्षमित्यर्थः । परमाणौ तस्याप्रत्यक्षत्वादुक्तं महतीति । अन्यत्रापीति । अयं भावः । द्रव्यप्रत्यक्षे महत्वोद्भूतरूपवदालोकसंयोगानां साक्षात्कारणत्वं गुणादिप्रत्यक्षे च स्वाश्र-

यसमवायेन गुणत्वादिप्रत्यक्षे स्वाश्रयसमवेतसमवायेन द्रव्याधिकरणा-काभावप्रत्यक्षे साक्षात् द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे स्वाश्रयसमवायेन द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे च स्वाश्रयसमवेतसमवाय-सम्बन्धेन च महदुद्भूतरूपवदालोकसंयोगवद्विशेषणता योग्यसन्निकर्ष इत्येवं कार्यवशादुन्नेयमिति । अत्र स्वं महत्वादि ।

पिशाचात्यन्ताभावस्त्वयोग्यत्वादेव न गृह्यते, का पुनरत्यन्ताभावे योग्यता । योग्यमात्रप्रतियोगिके योग्यधर्मावच्छिन्नप्रतियोगिताकत्वं विशेषणम्, एवमन्यत्रानुभवानुसारेण योग्यता वाच्या, । सर्वाभावसाधारणं किंयोग्यत्वमिति चेन्न किंचिदिति गृहाण । तत्किं नानैवाभावयोग्यता इति चेदाम् । गुणयोग्यतावदननुगतस्यैव तत्वादिति संक्षेपः ।

ननुद्रव्याधिकरणकाभावप्रत्यक्षे महदुद्भूतरूपादिमद्विशेषणतायाः कारणत्वं । तथा च पिशाचात्यन्ताभावप्रत्यक्षं स्यादत आह पिशचेति । योग्यमात्रेति । घटत्वरूपयोग्यधर्मावच्छिन्नप्रतियोगिताको घटरूपयोग्यप्रतियोगिको घटाभावः प्रत्यक्षः । द्रव्याभावेनापि पिशाचात्यन्ताभावस्तु न तथा योग्यप्रतियोगिकत्वाभावात् । एवं गुरुत्वप्रतियोगितावच्छेदकताकगुरुत्वद्घटात्यन्ताभावस्य न प्रत्यक्षः तस्य योग्यप्रतियोगित्वावच्छेदकत्वाभावात् । घटाकाशप्रतियोगिकाद्यभाववारणाय मात्रपदं तथा च योग्यायोग्यप्रतियोगिके योग्यधर्मावच्छिन्नप्रतियोगिताकत्वं न विशेषणमित्यर्थः । अत्राकाशद्वित्वगुरुत्वादेश्चाभावो न प्रत्यक्षः । एवमाकाशभेदो गुरुत्ववद्भेदश्च न प्रत्यक्षः । पिशाचभेदस्तु प्रत्यक्षः फलानुरोधेन तथैव स्वभावकल्पना । एवं घटत्वत्वावच्छिन्नाभावो न प्रत्यक्षः घटेतरावृत्तित्वस्यायोग्यत्वात् । एवं ब्राह्मणत्वाभावो ऽपि न प्रत्यक्षः ब्राह्मणत्वव्यञ्जकीभूत-

विशुद्धपितृमातृजन्यत्वस्य शूद्रादावभावे ऽपि शूद्रत्वनिश्चयाभावदशायां सन्निकर्षसत्वे ऽपि ब्राह्मणत्वाभावस्य प्रत्यक्षाभावात्। शूद्रत्वनिश्चये तु विशुद्धमातृपितृयोनिजन्यत्वाभावमन्तरेणापि ब्राह्मणत्वाभावो प्रत्यक्ष इति। अन्यत्राप्यनुभवेति। श्रोत्रे शब्दाभावः श्रोत्रेण। आत्मनि ज्ञानाद्यभावो मनसा। गुडे तिक्ताभावो रसनया। पाषाणे गन्धाभावो घ्राणेन गृह्यत इत्या-द्यनुभवानुसारेण योग्यता वाच्येत्यर्थः। ननु सर्वाभावसाधारणयोग्य-ताया अभावेन तत्तद्रूपसाद्यभावात् प्रतिविभिन्नयोग्यता वाच्या। तथा चाननुगम इत्यत आह ओमिति। इष्टापत्तिरित्यर्थः। गुणेति। यथा रूपा-दिग्रहे योग्यता भिन्ना तथा रूपाद्यभावग्रहे पीत्यर्थः। तत्वाद् योग्य-तात्वात्। संक्षेप इति। अयं भावः प्रतियोगि तद्व्याप्येतरेत्यत्र प्रतियोगि व्याप्यत्वं न दैशिकं यत्रेन्द्रियसंनिकर्षस्तत्र प्रतियोगीति दैशिकव्या-प्त्यभावेन संनिकर्षस्य प्रतियोगिव्याप्यत्वाभावात्। जलपरमाणौ पृथिवी-त्वाभावग्रहप्रसङ्गात्। महत्वादेः कालिकेन पृथिवीत्वव्याप्यत्वेनाभाव-ग्राहकसामग्रीतरकोटिनिविष्टत्वात्। एवं चात्र व्याप्यपदेन प्रतियोगि-ग्राहकासाधारणमेव वाच्यमिति सन्निकर्षादेरप्यसाधारण्यात्तेषां व्याप्य-त्वं। यदि चासाधारण्यं दुर्वचं तदा चिन्तामणिकारीया योग्यता वाच्या सा च प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा। प्रति-योगी घटादिः तस्य सत्वप्रसञ्जनेन प्रसञ्जितः आपादितः प्रतियोगी यस्य तत्कोपलम्भाभाव इत्यर्थः तथा च यदि स्याच्चोपलभ्येतेत्येतत्प-र्यवसितार्थिका योग्यानुपलब्धिः नोपलभ्येतेति कृत्वा नास्तीत्येतादृशा-भावप्रत्यक्षे कारणं। भवति हि आलोकादिसत्वे यदधिकरणे घटादिक-मुपलभ्यते तत्र तदभावो नोपलभ्यत इति प्रतियोग्युपलम्भाभावोऽभावप्र-त्यक्षे कारणं। तत्सत्वेपि क्वचिदभावो नोपलभ्यते क्वचिच्चोपलभ्यत इति योग्यता वश्यं वाच्येति दिक्॥

**अथ किमिदं चक्षुरादि तैजसमिन्द्रियं रूपग्रा-हकम् महदिन्द्रियं वा चक्षुः। वायवीयमिन्द्रियं स्प-**

र्शग्राहकम् महदिन्द्रियं वा त्वक्। आप्यमिन्द्रियं रसग्राहकं महदिन्द्रियं वा रसनं । पार्थिवमिन्द्रियं गन्धग्राहकं महदिन्द्रियं वा घ्राणं। महत्पदं मनोवारणाय कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं। शब्दग्राहकं महदिन्द्रियं वा श्रोत्रम्। निःस्पर्शमणु मनः । निःस्पर्शपदं पार्थिवपरमाणुवारणाय। अणुपदं विभुवारणाय

ननु साक्षात्कारिप्रमाकरणं प्रत्यक्षं तच्च चक्षुरादिस्तत्किमत आह अथेति। त्वगादिवारणाय तैजसमिति। वन्ह्यादौ तद्वारणायेन्द्रियमिति। ननु चक्षुरादितैजसत्वसिद्धाविदं युज्यत इत्यत आह रूपेति। अनयैव रीत्या ऽग्रेप्याभासा बोध्याः। दीपादावतिव्याप्तिवारणायेन्द्रियमिति। त्वगिन्द्रियमाह वायवीयमिति। विषयरूपवायौ तद्वारणायेन्द्रियमिति। घ्राणलक्षणमाह पार्थिवमिति । गन्धेति । घ्राणसंयुक्तसमवाये तद्वारणायेन्द्रियमिति। श्रोत्रलक्षणमाह कर्णेति। नन्वीश्वरस्य शब्दकारणत्वेन नभस्य समवायिकारणत्वमात्रं कल्पते लाघवादित्यतिरिक्तनभसि मानाभावाल्लक्षणान्तरमाह शब्देति। समवाये तद्वारणायेन्द्रियमिति। मनोलक्षणमाह निःस्पर्शमणु मन इति। अत्र चक्षुरादीनां रूपग्राहकत्वेन तैजसत्वादिकमुपपन्नं। तथा हि चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपमात्रग्राहकत्वात्प्रदीपवत्। अनयैव रीत्या त्वग्रसनघ्राणश्रोत्राणां यथायथं स्पर्शरसगन्धशब्दमात्रग्राहकत्वाद् वायवीयत्वं जलीयत्वं पार्थिवत्वं गगनात्मकत्वं च सिध्यति।

अत्रमीमांसकाः॥ मनो नाणु किन्तु विभु निःस्पर्शद्रव्यत्वाद् आत्मवत्। मनस्त्वं चात्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वमित्याहुः। तन्न–विभुत्वे, आत्मना संयोगानुपपत्तेः। तथा हि

द्विविधः संयोगः कर्मजः अवयवसंयोगजन्यश्च ॥ न च विभोरात्मनः कर्मास्ति, मनो यदि विभु तदा तस्यापि कर्माभावात् कुतः कर्मजसंयोगसंभवः । न चानयोरवयवोऽस्ति येन तत्संयोगजः संयोगः स्यात् न च नित्य एव विभुनः संयोगो ऽजसंयोगनिषेधात् । कुतोनिषेध इति चेत् मानाभावात्—संयोगत्वावच्छेदेन द्रव्यजन्यत्वावधारणाच्च अप्रयोजकमिदमनुमानमिति संक्षेपः इति श्रीचूडामणिभट्टाचार्यविरचितायां न्यायसिद्धान्तमञ्जर्यां प्रत्यक्षपरिच्छेदः ।

ननु मनसोऽणुत्वाभावात्कथमिदं लक्षणं सिध्यति । तथा च मन इतरेभ्यो भिद्यते निःस्पर्शत्वसत्यणुत्वादित्यत्र स्वरूपासिद्धिं शङ्कते मनो नाणु इति । निःस्पर्शेति । न च मनसो निःस्पर्शत्वासिद्धौ स्वरूपासिद्धिरिति वाच्यम् । स्पर्शवत्त्वेनारम्भकत्वान्मनसः स्पर्शवत्त्वे तस्य द्रव्यारम्भकत्वापत्तेः । मनस्त्वं किमत आह मनस्त्वं चेति । आत्मन्यतिव्याप्तिवारणाय सत्यन्तम् । संयोगाश्रयत्वमसमवायिकारणसंयोगाश्रयत्वं च कपालादावतिव्याप्तमत आह ज्ञानेति । संयोगजश्चेति । यथा हस्ततरुसंयोगात्कायतरुसंयोग इति । मनसो विभुत्वे आत्मदृष्टान्तेन कर्मजन्यसंयोगाभावमुपपादयितुमाह । न च विभोरिति । मनसोऽवयवाभावादवयवसंयोगजावयविसंयोगाभावमुपपादयितुमाह न च तयोरिति । तयोः आत्ममनसोः, । तत्संयोगजसंयोगः अवयवसंयोगजसंयोगः, । ननु तर्हि विभुत्वादात्ममनसोरनित्यः संयोगो मास्तु नित्यस्तु भविष्यत्येवेत्याशङ्कते न चैवमिति । एवं तयोरनित्यसंयोगाभावे, समाधत्ते अज इति । ननु मनसो विभुत्वे सिद्धे तत्र ज्ञानाद्यन्यथानुपपत्तिरेव मानमिति दूषणान्तरमाह संयोगत्वेति । ननु जन्यसंयोगत्वावच्छिन्नं प्रत्येव द्रव्यजन्यत्वमि-

त्यत आह अप्रयोजकमिति । इदमनुमानमिति । मनो विभु निःस्पर्श-द्रव्यत्वाद् इति निरुक्तानुमानमित्यर्थः । नन्वात्ममनोयोगस्य ज्ञानत्वावच्छिन्नं प्रति जन्यज्ञानत्वावच्छिन्नं प्रति वा हेतुत्वे सिद्धे सत्य एवेदमुपपन्नं । तत्रैव मानं न पश्यामः । तथा हि । पुरीततिमनःसंयोगात्मकसुषुप्तिदशायामात्मनो विभुत्वेन पुरीतत्यवच्छेदेनात्ममनोयोगस्यापि सम्भवात्तदा ज्ञानाद्युत्पत्त्यापत्तिरिति जन्यज्ञानत्वाद्यवच्छिन्नं प्रति त्वङ्मनोयोगस्य हेतुत्वेनैव निर्वाहात् । न च सुषुप्तिदशायां त्वङ्मनोयोगो ऽपि कुतो नेति वाच्यम् । त्वङ्मनोयोगकाले सुषुप्त्यभावात् । अत एव 'मनो यदा त्वचं परिहृत्य पुरीततिमनुप्रविशति तदा सुषुप्तिरिति गीयते" । न च तथा ऽपि सुषुप्तिदशायां ज्ञानाद्युत्पत्तिवारणाय प्राणमनःसंयोग एवास्तु किन्त्वङ्मनोयोगस्य हेतुत्वेनेति वाच्यम् प्राणत्वत्वक्त्वयोर्जातित्वेन विनिगमनाविरहादिति चेन्न। सुषुप्तिदशायां किं ज्ञानमापाद्यते तदा चक्षुरादिमनोयोगाभावान्न चाक्षुषादिप्रत्यक्षं । नापि स्मृतिः फलबलकल्प्योद्बोधकाभावात् । न वा ऽनुमित्यादिः परामर्शाद्यभावात् । नाप्यात्मादिमानसम् ज्ञानादिरूपविशेषगुणाविषयकात्मविषयकज्ञानस्य शशशृङ्गायमाणत्वादिति संक्षेपः । अथात्ममनोयोगस्य जन्यज्ञानत्वाद्यवच्छिन्नं प्रति कारणत्वे सिद्धे ऽपि तत्कारणतावच्छेदककोटिप्रविष्टात्मत्वस्य जातित्वे मानाभावः । न च तत्कोटिप्रविष्टत्वमेव मानमिति वाच्यम् । ईश्वरे सा स्यादिति चेत् । तत्र प्रत्यक्षस्यैव प्रमाणत्वात् । तथाहि स्वस्यात्मनि निखिलानामहं सुखीत्यादिप्रत्यक्षस्यात्मविषयकत्वात् । न चान्यस्येदृशात्मप्रत्यक्षत्वे किं मानमिति वाच्यम् । सशपथमन्येषां प्रश्नेन निश्चयाद् यत्रातीतानागतशरीरिणां न तादृशं प्रत्यक्षं तत्रात्मा वारे द्रष्टव्य इत्यादिश्रुतेरेव मानत्वात् । एवं च कुत्रचिच्छ्रोतादिव्यवहारात्क्वचित्प्रत्यक्षादात्मत्वसिद्धिः । अत एव सुखादिसमवायिकारणतावच्छेदकत्वेन सिद्धाया विद्यमानशरीरात्मनि च प्रत्यक्षसिद्धाया आत्मपदशक्यतावच्छेदकरूपाया आत्मत्वजातेर्भगवदात्मन्यपि स्वीकारः । श्रोतादिव्यवहारस्य भगवदात्म-

न्यपि सत्वादिति दिक्। अत्रायं मूलोक्तसंक्षेपार्थः प्रतिभाति। रासनसामग्री-सत्वे चाक्षुषे नोत्पद्यते युगपन्नानाज्ञानोत्पत्तेरभावादित्यनुभवसिद्धम्। तच्च मनसो विभुत्वे न सम्भवति सर्वेन्द्रियाणां मनसः सान्निध्यसम्भवात्। विभुत्वाभावे तु यस्येन्द्रियस्य सन्निधानं तेनैवेन्द्रियेण ज्ञानं जन्यत इति। न च शतावधानस्थले दीर्घशष्कुलीभक्षणादौ चैकदा कथं नानाज्ञान-मिति वाच्यम् तत्रैकदा ज्ञानोत्पत्तेरभावात्। परं तु मनसो वेगातिशया-त्प्रत्येकं निखिलेन्द्रियजन्यज्ञानमिति। न च यौगपद्यप्रत्ययः कथमिति वाच्यम् तस्य भ्रान्तत्वात्। न च मनसो ज्ञानेन्द्रियसमवधाने ऽप्यदृष्ट-वशादेकमेकमेव ज्ञानमिति वाच्यम्। तर्हि तत्तददृष्टविशेषसहकृतमनसा एव चाक्षुषादिसम्भवे किञ्चक्षुरादिहेतुत्वकल्पनयेति दिक्॥

श्रीमन्नृसिंहपदपङ्कजसेवनेन श्रीरामकृष्णपदपङ्कजचिन्तनेन।
निर्णीय तर्कनिचयं द्विजनागरेण श्रीयादवेन
रचितः प्रथमो ऽत्र खण्डः।



अथानुमानं निरूप्यते। तत्रानुमितिकरणमनु-
मानम्। अनुमितित्वं च अनुमितेर्मानसानुभवसिद्धो
जातिविशेषः। जन्यज्ञानजन्यत्वाव्यभिचारि जन्यशा-
ब्दधीजन्यत्वव्यभिचारि जातिमदनुभवत्वं वा। प्रत्य-
क्षत्ववारणाय जन्यज्ञानजन्यत्वाव्यभिचारीति ज्ञाना-
जन्ये नित्ये निर्विकल्पके च तद्धीजन्यत्वव्यभिचा-
रीति। तत्रापि प्रथमजन्यपदं चाक्षुषत्वादिवारणाय
तद्धीश्वरज्ञानजन्यत्वाव्यभिचारि सर्वेषां तदाश्रयाणा-
मीश्वरधीजन्यत्वात्। उपमितित्वशाब्दत्ववारणाय
व्यभिचारीत्यन्तम्॥

श्रीगणेशाय नमः॥ उमापतिं शिवं नत्वा [illegible]
अनुमानपरिच्छेदे मञ्जर्याः सार उच्यते।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति [illegible]
स्थितौ प्रत्यक्षजिज्ञासा तद्रूपान्यत्वं निरूपिते [illegible]
निरूपणेच्छा। तत्र सिद्धत्वबुद्धेः प्रतिबन्धकत्वान्न [illegible]
प्रत्यक्षे ऽनुमाननिरूपणप्रतिबन्धीभूतायाः [illegible]
त्वादनुमानोपस्थितौ तन्निरूपणे जिज्ञासायाः [illegible]
व्यत्वमित्यवसरसङ्गत्या नुमाननिरूपयितुमाह अथेति [illegible]
कारशब्देनावसरः सूच्यत इति। तथा चात्र प्रत्यक्ष[illegible]
र्त्तमाननिरूपणविषयो ऽनुमानमिति बोधः। तत्र [illegible]
रनुमाने निरूपणीये,। नन्वनुगतप्रतीत्यैव यदि जातिसिद्धि[illegible]
त्वादावपि सदित्यनुगतप्रतीत्या जातिसिद्धिः स्यात्। न [illegible]

व्याप्तिविशिष्टपक्षधर्मस्तस्य भावो व्याप्तिविशिष्टपक्षधर्मता तद्घटको यो लघुपदार्थस्तज्ज्ञानमित्यर्थः । व्याप्तिपक्षधर्मतयोर्व्यावर्त्तनाय लघ्वित्युक्तं । लिङ्गकरणतावादिनिरासाय ज्ञानेत्युक्तम् । न च लाघवात्तादृशपदार्थ एव करणमस्तु किं तन्निरासेनेति वाच्यम् । अतीतानागतहेतुस्थलेऽनुमित्यनुपपत्तेस्तज्ज्ञानस्य च सम्भवात् । इयं अनुमितिकरणलक्षणघटकीभूता, साध्यात्यन्ताभाववद्वृत्ति । भवति हि वन्ह्यादिसाध्यकधूमादिसद्धेताविदं लक्षणं । वन्ह्याद्यभाववति ह्रदादौ धूमादेरवृत्तेर्न भवति च धूमादिसाध्यकवन्ह्याद्यसद्धेतौ धूमाद्यभाववति तप्तायोगोलकादौ वन्हेः सत्वात् । वन्ह्यन्योन्याभाववति पर्वते ऽपि धूमस्य सत्वादत्यन्तेत्युक्तं । अत्र हेतौ साध्यसामानाधिकरण्यं बोध्यं तेन वह्निमानाकाशादित्यादौ नातिव्याप्तिः अत्र साध्याभावः साध्यभावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकः साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकश्च बोध्यः । तेन समवायेन वन्ह्यभाववति धूमस्य वृत्तित्वे ऽपि न दोषः । न च व्यधिकरणसम्बन्धं प्रतियोगितावच्छेदकतावच्छेदकीकृत्य साध्यतावच्छेदकसम्बन्धभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभाववति धूमस्य सत्वेऽपि दोषः । वृत्तित्वमपि हेतुतावच्छेदकसम्बन्धेन बोध्यम् । तेन वन्ह्यभाववति धूमावयवे समवायेन धूमस्य वृत्तावपि न दोषः । पर्वतीयेति । यद्यपि साध्याभावः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको विवक्षितस्तदा तद्वारयितुं शक्यं तथाऽपि कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिर्दुर्वारा न च प्रतियोगिवैयधिकरण्यमप्यभावे देयमिति वाच्यम् व्याप्यवृत्तिसाध्यके तादृशसाध्याभावस्याप्रसिद्ध्या वारणीयावारणात् । इह नितम्बे हुताशनो न शिखर इति प्रतीत्या संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वेन साध्यतावच्छेदकावच्छिन्नत्वविवक्षायामपि वन्हिमान्धूमादित्यादौ तादृशसाध्याभाववत्वस्य पर्वते ऽपि सत्वादव्याप्तिरित्यत आह नचेति । वन्ह्यादिमदन्यस्मिन्ह्रदादौ धूमादेरवृत्तित्वाल्लक्षणसमन्वयः । एवं चाव्याप्यवृत्तिसंयोगादिसाध्यकस्थले पि न दोषः । वन्हिमदिति । तथा

चाव्याप्तिरिति भावः । अथ घटान्य इत्यत्र यथा घटत्वावच्छिन्नप्रतियोगिताको भेदो बुध्यते । तथा साध्यवदन्य इत्यत्रापि साध्यवत्त्वावच्छिन्नप्रतियोगिताक एव भेदो बुध्यते । अन्यथा घटे पि यत्किञ्चित्प्रतियोगिकभेदस्य सत्त्वात्साध्यवति यत्किञ्चित्प्रतियोगिकसाध्यवद्भेदस्य सत्त्वाद्घटो घटभिन्न इति साध्यवत् साध्यवद्भिन्नमिति च प्रत्ययापत्तेरित्यभिप्रायवानाह साध्यवत्त्वेति अत्रापि हेतोर्वृत्तित्वं हेतुतावच्छेदकसंबन्धेन तेन धूमावयवे हेतोः सत्त्वेपि न क्षतिः । एवं च हेतुतावच्छेदकसम्बन्धेन यदधिकरणावृत्ति साध्यवत्त्वावच्छिन्नभेदवत्त्वं तत्त्वमित्यर्थे तात्पर्यं बोध्यम् । तेन जातिमान्सत्त्वादित्यादौ साध्यवत्त्वावच्छिन्नभिन्ने सामान्यादौ हेतुतावच्छेदकीभूतेन समवायेन वृत्तेरप्रसिद्ध्या पि नाव्याप्तिरिति । केवलान्वयीति । वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि सर्वस्यैव वाच्यत्वात्तद्भेदाप्रसिद्ध्याऽव्याप्तेरित्यर्थः ॥

**अत्र मीमांसकाः केवलान्वयिसाध्यकमनुमानमेव न क्व तावदव्याप्त्यवकाश इत्याहुस्तन्न इह मेयत्वमनुमिनोमीत्यनुभवापलापापत्तेः न च कारणबाधाद्भ्रान्तिरियं । व्यभिचारेणैव तद्बुद्धेः कारणत्वासिद्धेः ।**

अत्र मीमांसका इति । तेषामयमाशयः । प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसामानाधिकरण्यादिरूपव्याप्तिज्ञानं न हेतुर्गौरवात् । किं तु, साध्याभाववद्वृत्तित्वज्ञानं साध्यवदन्यावृत्तित्वज्ञानं वा लाघवात् । एकसम्बन्धेन निखिलसाधनसाधारण्येनापि लाघवं । न च वन्ह्यभाववदसंयुक्तधूमादेर्धूमावयवे परामर्षाद्वन्ह्यनुमित्यापत्तिरिति वाच्यम् । येनसम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षधर्मताज्ञानस्य कारणत्वमित्यस्य विवक्षितत्वात् । न च तथापि संयोगेन वन्ह्यभाववदवृत्तित्वज्ञानात्समवायेन वन्ह्यनुमि-

त्यापत्तिरिति वाच्यम् । यत्सम्बन्धावच्छिन्नसाध्याभाववति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन साध्यसिद्धिः फलमित्यस्य विवक्षितत्वात् । तथा च केवलान्वयित्वाग्रहदशायां मेयत्वादिसाध्यकानुमितिः । तद्ग्रहदशायां तु तत्साध्यकानुमितिलोप इति दिक् । अथ हेतुसाध्यभेदेन व्याप्तेर्भेदो भवतु वन्ह्याद्यनुमितौ वन्ह्याद्यभाववदवृत्तित्वज्ञानं केवलान्वयिनि तु हेतुसमानाधिकरणेत्यादिव्याप्तिज्ञानादनुमित्युत्पत्तौ किमनिष्टं ॥ एवं च मेयत्वमनुमीति प्रमानुमितिविषयकानुभवोऽप्युपपन्नः भवन्मते तदपलापापत्तेरित्याशयात्समाधत्ते इह प्रमेयत्वमिति । नन्वभिनमेव हेतुसमानाधिकरणेत्यादिकं गौरवान्नानुमितिहेतुः किं तु साध्याभाववदवृत्तित्वज्ञानं साध्यवदन्यावृत्तित्वज्ञानं च वाच्यं ज्ञेयत्वादित्यत्र तु केवलान्वयित्वे ग्रहदशायां वाच्यत्वाभाववदवृत्ति वाच्यत्ववदन्यावृत्ति वा ज्ञेयत्वमिति भ्रमरूपव्याप्तिज्ञानं हेतुस्तदा निरुक्ताभावो ऽप्युपपन्नः । इत्थमेव विशेषदर्शनकाले केवलान्वयिधर्मप्रकारकानुमितिखण्डनमेव केवलान्वयिखण्डनमिति तान्त्रिकप्रवादोपीत्यायवानाह न चेति । केवलान्वयित्वग्रहदशायां तत्साध्यकानुमितेर्बाधात्तादृशानुमितिविषयकप्रतीतेर्भ्रान्तित्वादित्यर्थः । अथ वा साध्याभाववदवृत्तित्वादिरूपकारणबाधादित्यर्थः । विशेषदर्शिनामपि मेयत्वमनुमिनोमीति प्रतीतेः सत्वान्नेयं भ्रान्तिस्तथा च साध्यवदन्यावृत्तित्वज्ञानं विना ऽपि हेतुसमानाधिकरणेत्यादितो ऽप्यनुमितेः सत्वात्तद्बुद्धेरकारणत्वमित्याह व्यभिचारेणेति । तद्बुद्धेः साध्यवदन्यावृत्तित्वबुद्धेः, ।

**सौगतास्तु केवलान्वयिनि साध्यवदन्यदलीकमेवासत्ख्यातिसिद्धन्तदवृत्तित्वज्ञानादेवानुमितिरित्याहुस्तन्न । असत्ख्यातेरसिद्धेः किं च ज्ञेयत्वसाध्यके इयमप्यव्याप्तिर्दुर्वारा । न ह्यलीकमज्ञेयं भवद्भिरिष्यते ।**

शून्यवादिनां मतं दूषयितुमाह । सौगतास्त्विति । साध्यवदन्य-

भेदसिद्धौ सुतरामीश्वरस्य भेदसिद्धिरिति संक्षेपः । नन्वलीकविषयकं किं ज्ञानमुच्यते यद्विषयता ह्यसविष्टा । न तावत्प्रत्यक्षं तेन सह सन्निकर्षाभावात् । नाप्यानुमानिकं अलीकनिरूपितव्याप्त्यभावात् । न च शाब्दमपि पदानामलीके शक्तिलक्षणयोरभावात् । नाप्युपमितिः । अलीके सादृश्यज्ञानाभावात् । तथा च ज्ञाननिरूपितायां विषयतापरपर्यायरूपायाः ख्यातेः सद्वृत्तित्वाभावासिद्धिरित्यभिप्रायवानाह असत्ख्यातेरिति ॥ विषयतायाः सद्वृत्तित्वाभावस्यासिद्धेरित्यर्थः । तथा च न सिद्धासिद्धिव्याघातः । ननु ज्ञानाविषयीभूतमप्यलीकं भविष्यतीत्यत आह किं चेति । इत्थं अलीकस्य ज्ञानाविषयत्वे, । न हीति । ज्ञेयत्वं ज्ञानविषयत्वं तथा च ज्ञानविषयान्यस्मिन्पदार्थे मानाभावादिति भावः । अत्र सोंडलोपाध्यायाः । पटो नास्तीति प्रतीतितो घटत्वेन पटोनास्तीति विलक्षणप्रतीसिद्धौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्तथा च समवायितया वाच्यत्वाद्यभावस्य वाच्यत्ववदन्यत्वस्य च घटे सत्वेन केवलान्वयिनि नोक्ता व्याप्तिरिति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावं स्वीचक्रुः । अथ तथा ऽपि तादृशसाध्याभाववति घटादौ मेयत्वस्य सत्वाद्व्यभिचार इति चेन्न । व्यभिचारस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वात्मकत्वात् । ज्ञेयत्वे च तदभावान्न दोषः । अथात्र तादृशाव्यभिचारित्वमप्रसिद्धमिति चेदत्र मिश्राः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका यावन्तः साध्याभावास्तत्सजातीया ये तदाश्रयवृत्तित्वाभावास्तद्वत्वं व्याप्तिः । भवति हि वन्हिमान् धूमादित्यादौ वन्हित्वावच्छिन्नवह्निव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इन्धनत्वादिना वन्ह्यभावादयस्तदधिकरणं जगत्तत्समानजातीयो पीन्धनत्वादिना जगद्वृत्तित्वाभावस्तस्य धूमे सत्वाल्लक्षणसमन्वय इति । एवं वन्हित्वेन वन्ह्यभावो ऽपि तादृशस्तदधिकरणं निर्वन्हिदेशः निर्वन्हिवृत्तित्वाभावस्य धूमे सत्वाल्लक्षणसमन्वय इति । एवं वाच्यज्ञ यत्वादित्यादौ ज्ञेयत्वत्वेन वाच्यत्वाभावो ऽपि तादृशस्तदाश्रयो जगत्तद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्य ज्ञेयत्वे ऽपि

सत्वात्तत्र लक्षणसमन्वयः । धूमवान्वह्नेरित्यादौ निर्धूमे ऽयःपिण्डे वह्नेः सत्वात्तादृशनिर्धूमवृत्तित्वाभावस्य वन्हावसत्वाच्च लक्षणसमन्वयः । धूमवान्वहेरित्यादौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य धूमत्वेन घटाभावस्याश्रयो जगत्तत्सजातीयस्य घटत्वेन जगद्वृत्तित्वाभावस्य वन्हौ सत्वाद्व्याप्तिरिति । तथा च तदन्तर्गतस्य धूमत्वेन धूमाभावस्यापि प्रवेशात्तद्वन्निर्धूमवृत्तित्वाभावस्य वह्नावसत्वान्नातिव्याप्तिः तथा ऽपि धूमवान्वह्नेरित्यादौ धूमत्वरूपसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववदयःपिण्डात्मकनिर्धूमवृत्तित्वस्यापि व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य वन्हौ सत्वादतिव्याप्तिरतः समानजातीयेति । समानजातीयत्वं च व्यधिकरणधर्मावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वेन समानाधिकरणधर्मावच्छिन्नाभावस्य समानाधिकरणधर्मावच्छिन्नाभावत्वेनेति तेनाभावत्वादिना साजात्यसत्वे ऽपि न दोषः । साध्याभाववदित्याद्युक्तौ तु महानसीयवह्न्यभाववत्पर्वतवृत्तित्वाभावस्य धूमे विरहादव्याप्तिस्तद्वारणार्थं साध्यतावच्छेदकावच्छिन्नप्रतियोगिताका इति विवक्षणे प्रमेयसाध्यकस्थले तादृशसाध्याभावाप्रसिद्ध्या ऽव्याप्तिस्तद्वारणार्थं साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इति विवक्षणे तु वन्हिघटोभयाद्यभावसमानजातीयतादृशाभावस्य धूमादावसम्भवादव्याप्तिरतस्तादृशरूपावच्छिन्नप्रतियोगिताका इत्यन्तमुक्तम् । न च कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः कपिसंयोगाभाववति वृक्षे एतद्वृक्षत्वस्य सत्वादिति वाच्यम् । तादृशसाध्याभावस्य व्याप्यवृत्तित्वविवक्षणात् । न च धूमवान्वह्नेरित्यादौ तादृशस्य ह्रदादिवृत्तिन्वत्वावच्छिन्नाभावस्य वन्हावपि सत्वादतिव्याप्तिरिति वाच्यम् । निरुक्तसाध्याभावस्यायोगोलकावृत्तित्वावच्छिन्नाभावस्यायोगोलकमात्रवृत्तित्वात्तद्वद्वृत्तित्वाभावस्य वन्हावसत्वादतिव्याप्त्यभावात् । अथ यदि पार्थिवत्वादिविशिष्टं यन्निरुक्तसाध्याभाववत्तदयोगोलकवृत्तित्वन्तदभावस्य वन्हौ सत्वादतिव्याप्तिरिति सूक्ष्मीक्ष्यते तर्हि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक-

तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकोयः साध्याभावसजातीयाभावस्तन्निष्ठाभावत्वसामान्यं यद्धेतुवृत्तित्वव्याप्य तत्त्वं व्याप्तिरिति भवति हि वह्निमान्धूमादित्यादौ तादृशसाध्याभाववद्वृत्तित्वत्वात्मकनिर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताको निर्वह्निवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः स साध्याभावसजातीयोपि तादृशाभावनिष्ठाभावत्वमात्रं धूमरूपहेतुवृत्तित्वव्याप्यमिति लक्षणसमन्वय इति। तथा च तादृशसाध्याभाववद्वृत्तित्वत्वस्य ह्रदवृत्तित्वे तैजसनिष्ठायोगोलकवृत्तित्वेऽपि सत्त्वात्तत्र तादृशायोगोलकवृत्तित्वाभावप्रतियोगिताविरहान्न दोषः। सामान्यपदोपादानाद्भावत्वपदानुपादानको न दोषः। धूमवान्वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नाभावरूपसाध्याभाववद्वृत्तित्वत्वस्य पर्वतवृत्तित्वेपि सत्त्वान्निर्धूमवृत्तित्वत्वावच्छिन्नप्रतियोगितायास्तादृशसाध्याभाववद्वृत्तित्वत्वव्यापकत्वाभावात्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो न लक्षणघटकः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य वन्हावपि सत्त्वादतिव्याप्तिरतस्तत्तदिति साध्याभावविशेषणम्। तथा च यदि साध्याभावः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्तदा समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वं वाच्यम्। यदि च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्तदा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वमिति न दोषः। अथ तथापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य वन्हिभिन्नत्वनिर्धूमवृत्तित्वोभयत्वावच्छिन्नाभावस्य वन्हौ सत्त्वादतिव्याप्तिरिति चेत्। तादृशवृत्तित्वाभावस्य व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविवक्षणादिति। अत्र तादृशसाध्याभाववद्वृत्तित्व हेतुतावच्छेदकसम्बन्धेन वाच्यम्। तेन तादृशवन्ह्यभाववति धूमावयवे धूमस्य समवायेन वृत्तित्वेऽपि न दोषः। नच हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्य विवक्षणे जातिमान्सत्त्वादित्यादावव्याप्तिः। तादृशसाध्याभाववति सामान्यादौ

स्तत्र वदन्ति कोयं कार्त्स्न्येन सम्बन्धः कृत्स्नेन साध्येन हेतोः सम्बन्धः कृत्स्नहेतौ साध्यसामानाधिकरण्यं वा कृत्स्नहेतुमति साध्यवत्त्वं वा। नाद्यः प्रसिद्धानुमानेऽव्याप्तेः। न हि धूमे सकलवन्हिसामानाधिकरण्यमस्ति। अयः पिण्डीयवन्हेः सामानाधिकरण्याभावात्। न द्वितीयः। एकव्यक्तिहेतावव्याप्तेः। न तृतीयः एकमात्रवृत्तिहेतावव्याप्तेः।

केवलान्वयिसाधारणं कस्यचिल्लक्षणं दूषयितुमाह कार्त्स्न्येनेति। कार्त्स्न्यं साकल्यमित्यर्थः। अथ किञ्चिच्चिष्टत्वेनापि कार्त्स्न्यस्य विविच्यानुपादानात्तच्चिष्टत्वमाशङ्क्य दूषयितुमाह तत्र वदन्तीत्यादिना। प्रसिद्धानुमाने वन्हिमान्धूमादित्यादौ। अयः पिण्डीयेति। एकस्मिन्नपि धूमे निखिलवन्हिसामानाधिकरण्याभाव इत्यपि बोध्यम्। एतेन कृत्स्नेन साध्याश्रयेण कृत्स्नेन साध्यसमानाधिकरणेन च हेतोः सम्बन्ध इति परास्तं। एवं पृथिवी गन्धादित्येकव्यक्तिसाध्यकेप्यव्याप्तिर्बोध्या। सकलेन वन्ह्याश्रयीभूतान्तर्गतेनायःपिण्डेन सकलेन वन्हिसमानाधिकरणान्तर्गतेनायःपिण्डत्वेन धूमसम्बन्धाभावात्। एकेति गुणवान् द्रव्यत्वात् गन्धवान् पृथिवीत्वादित्यादौ हेतौ साकल्याप्रसिद्धेरित्यर्थः। अत एव कृत्स्नस्य साधनस्य सामानाधिकरण्यं साध्य इति निरस्तम्। एकमात्रेति। आकाशं द्रव्यं शब्दादित्यादौ साधनाश्रये यावत्त्वाप्रसिद्धेरित्यर्थः। निखिलवृत्तेरप्येकवृत्तित्वस्याक्षतत्वान्मात्रेत्युक्तम्॥

अत्रोच्यते साध्यसमानाधिकरणस्वसमानाधिकरणयावत्कत्वं व्याप्तिः। यत्समानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तत्त्वं व्याप्तिरिति यावत्। भवति च धूमसमानाधिकरणा यावन्तो वन्हिसमाना-

धिकरणा इति धूमे वन्हिव्याप्तिः न तु वन्हौ धूमस्य । न हि वन्हिसमानाधिकरणा यावन्तो धूमसमानाधिकरणाः । अयःपिण्डत्वस्य वन्हिसमानाधिकरणस्य धूमासमानाधिकरणत्वात् । यद्विशिष्टसमानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तद्वत्वं वा भवति च धूमत्वविशिष्टसमानाधिकरणा यावन्तो वन्हिसमानाधिकरणास्तद्वत्वं च धूमे । न चेदृशं धूमं प्रति वन्हित्वं नातो वन्हौ धूमव्याप्तिः । अस्ति चेदं केवलान्वयिनि अभिधेयत्वविशिष्टसमानाधिकरणानां यावतां मेयत्वसमानाधिकरणत्वात् । एवं च लाघवात्साध्यवदन्यावृत्तित्वे सति साध्यसमानाधिकरणत्वं व्याप्तिः । नचेयं केवलान्वयिन्यस्त्यतो नेदमनुमानमिति मीमांसकमतमपास्तम् । ततो ऽप्यस्य लघुत्वात् ।

अथ कृत्स्नेन यावता साधनसमानाधिकरणेन साध्यस्य सामानाधिकरण्यरूपसम्बन्ध इति पर्यवसितार्थाभिप्रायेण सिद्धान्तयति साध्येति यावत्वस्य साध्यसमानाधिकरणविशेषणत्वे वह्निमान्धूमादित्यत्राव्याप्तिः अयोगोलकत्वादेर्धूमसामानाधिकरण्याभावादिति यावत्वस्य साधनसमानाधिकरणविशेषणत्वमिति पर्यवसितार्थमाह यदिति । नन्विदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादावव्याप्तं । सत्तासमानाधिकरणस्य द्रव्यान्यत्वगुणत्वादेर्द्रव्यत्वासमानाधिकरणत्वादित्यत आह यद्विशिष्टेति । यत्पदं हेतुतावच्छेदकपरं तथा च द्रव्यान्यत्वगुणत्वादेर्गुणकर्मान्यत्वविशिष्टसत्तासमानाधिकरणत्वाभावान्न दोषः । एवं साध्यपदमपि साध्यतावच्छेदकावच्छिन्नपरं तेन गुणकर्मान्यत्वविशिष्टसत्तावाञ्जा-

तेरित्यादौ जातिसमानाधिकरणस्य द्रव्यान्यत्वादेः सत्तासमानाधिकरणत्वे ऽपि गुणकर्मान्यत्वविशिष्टसत्तासमानाधिकरणत्वाभावञ्च दोषः। तद्वत्वं तादृशहेतुतावच्छेदकवत्वम्। यदि च पूर्वलक्षणे ऽपि यत्पदं हेतुतावच्छेदकावच्छिन्नपरं साध्यपदं च साध्यतावच्छेदकावच्छिन्नपरमित्युच्यते तदा द्रव्यत्वगुणकर्मान्यत्वविशिष्टसत्वात्। गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादावव्याप्त्यतिव्याप्त्योरभावे ऽपि तत्र तादृशहेतुसामानाधिकरण्यव्यापकतादृशसाध्यसामानाधिकरण्यमित्येतादृशसम्बन्धरूपा नानाव्याप्तिः। इह तु तादृशसम्बन्धविशिष्टहेतुतावच्छेदकरूपा एकैव व्याप्तिरिति भेदः। तथा च साधनतावच्छेदकावच्छिन्नसामानाधिकरण्यव्यापकत्वं यद्धर्मावच्छिन्नसामानाधिकरण्यत्वेनावच्छिद्यते तद्धर्मावच्छिन्नसामानाधिकरण्यं तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकं वा व्याप्तिरिति तत्वम्। साधनतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यं तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकं वा व्याप्तिरिति निर्गलितार्थ इति संक्षेपः। तद्वत्वन्तादृशसम्बन्धविशिष्टधूमत्ववत्वं,। ईदृशमित्यस्य वन्हित्वेनान्वयः। ईदृशं निरुक्तधूमत्वसदृशं, धूममिति द्वितीयार्थो निरूपितत्वं वन्हित्वमित्यनन्तरं व्याप्तिरितिशेषः तथा च धूमनिरूपिता व्याप्तिर्वन्हित्वं न चेत्यर्थः। इदं व्याप्तिलक्षणं लाघवात्। हेतुसमानाधिकरणेत्यादिव्याप्त्यपेक्षया लाघवात्,। वन्हिनिरूपितसामानाधिकरण्यस्य घटे ऽपि सत्वात्तत्रातिव्याप्तिवारणाय सत्यन्तं। सत्यन्तस्याकाशादौ सत्वात्तत्रातिप्रसङ्गवारणाय साध्यसमानाधिकरत्वमिति। इयं साध्यवदन्येत्यादिव्याप्तिः,। इदं केवलान्वयिसाध्यकमनुमानं, ततो ऽपि साध्यवदन्येत्यादितो, ऽपि। अस्य, निरुक्तव्याप्तिस्वरूपस्य,।

अत्र चार्वाकाः। भवत्वियं व्याप्तिः। न चेयं शक्यग्रहा। किञ्चिद्धूमसमानाधिकरणं वन्ह्यसमानाधिकरणं भविष्यतीति शङ्काया दुर्वारत्वात्। न चेद्-

अथ ज्ञातमात्रस्य स्तनपानेष्टसाधनत्वानुमितिहेतुभूतव्याप्तिज्ञानं यथा तर्कं विना तथा वन्हिधूमादिव्याप्तिग्राहकतर्कमूलीभूतं किंचिद्व्याप्तिज्ञानमपि तर्कं विना भविष्यतीति नानवस्था तथा च तर्कस्य सर्वत्र न व्याप्तिग्रहमूलत्वमित्यभिप्रायवान्समाधत्ते व्यभिचारेति। आदिना सहचारदर्शनसंग्रहः। तथा च व्यभिचारज्ञानविरहसहकृतं सहचारज्ञानमेव व्याप्तिग्राहकमित्यर्थः। ननु व्यभिचारज्ञानविरह एव कथमित्याह। न चेति। क्वचित्तर्कादिभिः। न च तर्कोऽपि व्याप्तिघटितस्तन्निश्चये व्यभिचारशङ्काविरहादिकं कारणं। तद्विरहस्तर्कादित्येवमनवस्थेति वाच्यम्। तर्कघटकीभूतव्याप्तेर्भिन्नत्वात्तथा हि। तर्को जन्यत्वघटितः। तच्च कारणतानिरूपितकार्यतावत्त्वादि तत्र कारणत्वं नियमघटितं नियमश्च कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कारणतावच्छेदकसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकवत्त्वरूपः यदि च कार्यत्वं हि अनन्यथासिद्धनियतपश्चाद्भावित्वं तदपि कारणतावच्छेदकसम्बन्धेन कारणाधिकरणे कार्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वादिरूपं तच्चान्वयव्यतिरेकगम्यं न तु तर्कगम्यमिति नानवस्थेति। वन्हिरासभादिसमाजस्यान्वयव्यतिरेकाभ्यामन्वयव्यतिरेकौ धूमस्यावगम्यमानो वन्हिरासभाद्यन्यतरस्य धूमं प्रति हेतुत्वं निर्धार्य किं वन्हेरासभादेर्वा सर्वेषां वा हेतुत्वमिति संदिग्धे यद्व्यतिरेके धूमाद्यनुत्पत्तिं यदन्वये धूमोत्पत्तिं गृह्णाति तस्य हेतुत्वमिति निश्चिनोति यथा वन्हिः। अथ यत्सत्त्वेऽप्यनुत्पत्तिं यद्व्यतिरेकेऽप्युत्पत्तिं गृह्णाति न तस्य हेतुत्वमपि यथा रासभादेरिति वन्ह्याद्यन्यतमस्य हेतुत्वप्रदर्शनेन धूमोऽयमहेतुक एवोत्पत्स्यत इति शङ्काया निरासस्तथा वन्हिघटितकारणस्तोमदर्शनेन धूमोऽयमवन्हेरेव भविष्यतीति शङ्काया निरासः। रासभादेरहेतुत्वप्रदर्शनेन धूमोऽसौ वन्हिं विना रासभादेर्भविष्यतीति शङ्काया निरास इति। तथा च व्याप्तिग्रहोपाये प्रदर्श्यमाने चार्वाकेण व्यभिचारशङ्कायां प्रदर्श्यमानायां धूमो यदि वन्हिव्यभिचारी स्याद्वन्ह्यसमवहिताज्जन्यत्वमेति

नोक्त इत्यत आह दिगिति। अयम्भावः। यत्र पर्वतो वह्निमानिति पदं प्रयुक्तं तत्र कुत इति परेणोक्ते तदा धूमादिति स्वयं हेतुप्रयोगः कृतः ततः परेण धूमो ऽस्तु वन्हिर्मास्त्विति बाधो निश्चितस्तदा तर्कप्रवृत्तिस्तथा हि पर्वतो यदि निर्वह्निः स्यात्तदा निर्धूमः स्यादित्यादि विपक्षपरिशोधकतर्केणापादितबाधनिश्चयरूपविशिष्टबुद्धिप्रतिबन्धः क्रियते। प्रतिबध्यप्रतिबन्धकभावश्चैवम्। पर्वतत्वाद्यवच्छिन्नविशेष्यकनिर्वन्हित्वबुद्धित्वेन प्रतिबध्यता पर्वतत्वाद्यवच्छिन्नविशेष्यकनिर्धूमत्वव्याप्यनिर्वन्हित्वत्वाद्यवच्छिन्नाश्रयतानिश्चयविशिष्टनिर्धूमत्वादिविधेयकापत्तित्वेन पर्वतत्वाद्यवच्छिन्नविशेष्यकनिरालोकत्वव्याप्यनिर्वन्हित्वत्वावच्छिन्नाश्रयतानिश्चयविशिष्टनिरालोकत्वादिविधेयकापत्तित्वेन प्रतिबन्धकतेति। तर्कत्वं चापत्तित्वापरनामकमापादयामीत्यनुभवसिद्धो जातिविशेषो मानसत्वव्याप्यः। स च भ्रमप्रमासाधारणाहार्यमानसज्ञानवृत्तितदाश्रयस्य पक्षेसाध्याभावादिः। तथा च पर्वते वन्हिप्रत्यक्षानुमित्योर्विषयावैलक्षण्येप्यनुमिनोमीत्यनुव्यवसायादिसिद्धजातिकृतो भेदस्तथा तर्कस्यापि बाधादितस्तर्कयामीत्यनुव्यवसायबलाज्जातिसिद्धिरिति। ननु चाक्षुषत्वादिव्याप्य एव कुतो नेति चेन्न। अन्धानामपि तर्कोत्पत्तेः। चक्षुरादिशालिनोपि तत्सन्निकर्षमन्तरेणापि तर्कोत्पत्तेश्च। अत्रेदं बोध्यं। अनुमितौ यथा परामर्शः कारणं तथा तर्के ऽपि आपाद्यव्याप्यापादकवत्तापरामर्शो हेतुः। एवमनुमितौ यथा सिद्धिः प्रतिबन्धिका। तथा तर्के ऽपि पक्षविशेष्यकापाद्यनिश्चयरूपेष्टापत्तिरपि। इयान्परं भेदो विपर्ययपर्यवसायिनस्तर्कस्यापाद्याभावरूपबाधनिश्चयः प्रयोजकस्तद्विघटनद्वारा तादृशेष्टापत्तिः प्रतिबन्धिका अनुमितिं प्रति तु सिद्धिः प्रतिबन्धिकेति पक्षतावच्छेदकावच्छेदेनापत्तिं प्रति पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्येन च बाधनिश्चयस्य कारणत्वं तत्सामानाधिकरण्येनापत्तिं प्रति तु तदवच्छेदकावच्छेदेन बाधनिश्चयस्य कारणत्वं पक्षतावच्छेदकावच्छेदेनानुमितौ तदवच्छेदेन तत्सामानाधिकरण्येन च तत्सामानाधिकरण्येनानुमितावच्छे-

दकावच्छेदेन बाधनिश्चयः प्रतिबन्धक इति । एवं च यथा पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति नांशतः सिद्धसाधनं दोषस्तथा पक्षतावच्छेदकसामानाधिकरण्येन तर्कं प्रत्यंशत इष्टापत्तिरपि न दोषस्तादृशेष्टापत्तेः सामानाधिकरण्येन बाधनिश्चयविघटकत्वाभावात् पक्षतावच्छेदकावच्छेदेन तर्कं प्रति त्वंशत इष्टापत्तिर्दोषस्तस्य पक्षतावच्छेदकावच्छेदेन बाधनिश्चयविघटकत्वादिति संक्षेपः

**ननु सेयं व्याप्तिर्दृष्टान्तवृत्तिधूमे गृहीता न च पक्षीये ऽपि तथा च कथं तदनुमितिः पक्षवृत्तिधूमे व्याप्तिग्रहस्यानुमितिहेतुत्वादिति चेदत्राहुः, उक्ता व्याप्तिर्दृष्टान्तवृत्तिहेतौ धूमत्वेन गृहीता पर्वते धूमन्दृष्ट्वा स्मर्यते ततो विशेषणज्ञानरूपात्तस्मादसति बाधके व्याप्तिविशिष्टत्वेन पक्षधर्म्मधूमज्ञानं जायते। यद्वा दृष्टान्ते व्याप्तिज्ञानं ज्ञायमानधूमत्वरूपसामान्यलक्षणया प्रत्यासत्या सकलधूमगोचरमेव जायत इत्यदोषः ।**

अथ सामान्यलक्षणां प्रतिपादयितुं भूमिकामारचयति । नन्वित्यादि । यद्वा समानाधिकरणयोरेव व्याप्तिरिति पक्षमवलम्ब्याह नन्वित्यादि । सा अनुमितिहेतुभूतव्याप्तिज्ञानविषयिणी इयं यद्विशिष्टसमानाधिकरणेत्यादिरूपा नच पर्वतीय इति दृष्टान्तवृत्तिमहानसीयधूमे व्याप्तिर्गृहीता पर्वतीयधूमेन सह सन्निकर्षविरहात् तत्र व्याप्तिर्न गृहीतेत्यर्थः । ननु किमनिष्टमत आह तथा चेति । पर्वतीयधूमे सन्निकर्षं विना न पर्वतीयधूमे वन्हिव्याप्तिविशिष्टधीरिति कथं पर्वतीयवह्न्यनुमितिरित्यर्थः । अथ महानसीयधूमे गृहीताया महानसीयवन्हिव्याप्तेरेव पर्वतीयधूमे ऽपि सत्वात्तामादायैव पर्वतीयधूमे वन्हिव्याप्तिग्रहमन्तरेणापि

पर्वतीयधूमे इन्द्रियसन्निकर्षानन्तरमुद्बोधकवशात्स्मर्येत इति व्याप्तिस्मरण-रूपविशेषणज्ञानसत्त्वे व्याप्तिविशिष्टरूपविशिष्टज्ञानं ततोऽनुमितिरित्य-भिप्रायवतां केषाञ्चिन्मतमाह तत्राहुरिति । तस्माद्व्याप्तिज्ञानात् । नन्वादौ भ्रमात्मको महानसीयवह्न्यादौ कदाचिद्धूमव्याप्त्यनुभवः कदाचि-दुपाधेरप्यनुभवः पश्चात्समूहालम्बनबलाद्व्याप्त्युपाध्योः समूहालम्बनमेव स्मरणं तत्रापि व्याप्तिविशिष्टपक्षधर्मस्मरणं स्यादत आह असतीति । ननु-पर्वतीयधूमदर्शनोत्तरं नियमेनोद्बोधकसत्त्वे मानाभावेन नियमतो व्याप्ति-स्मरणाभावादाह यद्वेति ज्ञायमानं सामान्यं प्रत्यासत्तिरित्यभिप्राये-णाह धूमत्वेति । तथा चासन्निकृष्टस्य प्रत्यक्षविषयत्वाभावादन्यसन्नि-कर्षाभावेऽपि धूमत्ववन्हित्वरूपसामान्यस्यापि सन्निकर्षत्वस्वीकारात् पर्वतादिवृत्तिधूमेन पर्वतादिवृत्तिवन्हिना सह धूमत्ववन्हित्वरूपसन्निक-र्षस्य सत्वात्पर्वतादिवृत्तिधूमवन्हीनामुपस्थितौ धूमत्वेन धूमसामान्ये वह्नित्वेन वन्हिसामान्यस्य व्याप्तिग्रह इत्यर्थः । ननु सामान्याश्रयनि-खिलव्यक्तिप्रत्यक्षविशेषनिर्वाहार्थं सामान्यलक्षणाप्रत्यासत्तिस्वीकारस्तन्नि-र्वाहश्च न सम्भवति । सन्निकर्षत्वस्यैक्याभावेन जन्यप्रत्यक्षत्वाव-च्छिन्नं प्रति सन्निकर्षत्वेन कृप्तकारणतया वक्तुमशक्यत्वादिति चेन्न । इन्द्रि-यसन्निकर्षत्वस्यैक्याभावेऽपि सम्बन्धाननुगमस्य दोषत्वाभावेन क्षतिविर-हादिति । अत्रेदं बोध्यम् । संयोगादिषोढासन्निकर्षशून्याज्ञातद्रव्या-दिप्रत्यक्षनिर्वाहार्थं सामान्यलक्षणा एतत्सप्तकसन्निकर्षशून्याज्ञातद्रव्यादि-प्रत्यक्षनिर्वाहार्थं ज्ञानलक्षणा एतदष्टकशून्याज्ञातद्रव्यादिप्रत्यक्षनिर्वाहार्थं योगजधर्मप्रत्यासत्तिरिति ॥

**ननु सामान्यं यदि प्रत्यासत्तिस्तदाश्रयसाक्षा-त्कारजननी तदा विमुद्रितनयनस्यापि धूमत्वेन सक-लधूमसाक्षात्कारः स्यादिति चेन्न । यत्सामान्यं प्रत्या-सत्तिस्तत्प्रकारकतदाश्रयलौकिकसाक्षात्कारजनक-सामग्र्या अपि सामान्यप्रत्यासत्तौ सहकारित्वात् ।**

अथ सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थस्तत्र सर्वत्राश्रये साक्षादेव तदिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यमेव तदिन्द्रियस्य प्रत्यासत्तिस्तत्र सामान्यज्ञानानन्तरं निमीलितनयनदशायां धूमत्वादिना सकलधूमसाक्षात्कारः स्यान्न ज्ञायमानधूमत्वादेः सत्वादितिप्राचीनमते शङ्कते नन्वित्यादिना सामान्यप्रत्यासत्तिस्तदाश्रयसाक्षात्कारकजननी यदीत्यन्वयः । यत्सामान्यमिति अयमर्थः । यत्र ज्ञायमानसामान्यप्रत्यासत्तिस्तत्र कारणतावच्छेदकीभूतलौकिकसाक्षात्कारे तद्बहिरिन्द्रियजन्यत्वं विशेष्येण समं बहिरिन्द्रियस्य लौकिकसन्निकर्षश्चापेक्षित इत्यर्थस्तथा च निमीलितनयनदशायां विशेष्येण समं चक्षुःसन्निकर्षाभावान्न दोषः । लौकिकसन्निकर्षं विना ऽपि ज्ञानरूपसन्निकर्षसत्त्वादणुत्वेन यत्किञ्चिदणूपस्थितौ निखिलाणुगोचरः सामान्यलक्षणप्रत्यासत्तिजन्यो मानसो बोध इति बहिरित्युक्तं । सामान्यप्रकारकस्मरणविशेष्ये चक्षुःसन्निकृष्टे दोषवशान्नयनेनागृह्यमाणे धर्मिणि सामान्येन चाक्षुषापत्तिरत उक्तं बहिरिन्द्रियजन्यत्वमिति । एवं नयनेन गृह्यमाणे सामान्यप्रकारकज्ञानविशेष्ये धर्मिणि लौकिकसन्निकर्षविरहे ऽपि ज्ञानलक्षणालौकिकसन्निकर्षसत्त्वे ऽपि चाक्षुषज्ञानापत्तिरत उक्तं लौकिक इति । तथा च तत्पुरुषीयलौकिकसन्निकर्षविशिष्टधूमत्वेन कारणता तत्पुरुषीयधूमत्वप्रकारकधूमत्वाश्रयचाक्षुषत्वेन कार्यतेत्येवं क्रमेण कार्यकारणभाव इति । ननु तदिन्द्रियसम्बद्धवृत्तित्वमेवोच्यतां किन्तदिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापर्यन्तानुधावनेनेति चेन्न । यत्रेन्द्रियसम्बद्धधूलीपटले धूमत्वभ्रमे वन्हिव्याप्तिभ्रमदशायां तत्रेन्द्रियसम्बद्धवृत्तिधूमत्वरूपप्रत्यासत्तेरभावेन धूमेषु वन्हिव्याप्यग्रहाद्व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपकारणाभावेन धूम इति दर्शनाद्वह्न्यनुमितिर्न स्यादिति विवक्षिते त्विन्द्रियसम्बद्धधूलीपटलविशेष्यकधूमत्वप्रकारकज्ञानप्रकारीभूत धूमत्वं प्रत्यासत्तिरिति संक्षेपः । ननु यत्रादौ पुरोवर्त्तिनि घटत्वरूपेण यत्किञ्चिद्घटवत्वप्रकारकप्रत्यक्षं तदुत्तरं घटप्रकारेण निखिलघटाधिकरणसाक्षात्कारो जायते स न स्यात् । निखिलानां घटाधिकरणीभूतानां कपालानामिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटाधिकरणत्वा-

भावादिति चेन्न । द्विविधं हि सामान्यं सखण्डमखण्डं च सखण्डे च परम्परासम्बद्धमखण्डमेव प्रत्यासत्तिः । तथा च निरुक्तस्थले घटसम्बन्धेन घटत्वमेव प्रत्यासत्तिः । निखिलानां कपालानां घटसम्बन्धेन घटत्ववत्त्वादिति नोक्तदोषः । अथ समवायेन घटत्वप्रकारकज्ञानात्कालिकसम्बन्धेन घटत्वाश्रयभूतानां पटादीनां ज्ञानं स्यादिति चेन्न येन सम्बन्धेनेन्द्रियसम्बद्धं यत्सामान्यं ज्ञायते तेन सम्बन्धेन तदाश्रयाणां सा प्रत्यासत्तिरिति न दोषलेशो ऽपि । ननु सखण्डस्थले तद्घटादिव्यक्तिसम्बन्धेन घटत्वादेः कारणत्वमित्युक्तं तच्च न सम्भवति तद्घटादेर्नष्टानागतत्वदशायां तद्घटादिसम्बन्धेन च घटत्वादेरभावादिति चेदत्र नव्याः । सामान्यं लक्षणनिरूपकं विषयो यस्या इत्यर्थः तथा च स्वविषयाश्रयतासम्बन्धेन सर्वत्राश्रये तदिन्द्रियसम्बद्धविशेष्यकतदिन्द्रियजन्यसामान्यज्ञानमेव प्रत्यासत्तिः । ननु सामान्यज्ञानानन्तरं सामान्यज्ञानस्य प्रत्यासत्तित्वे ऽपि निमीलितनयनदशायां सन्निकर्षविरहे ऽपि सामान्यज्ञानस्य सत्वान्निखिलघटादेः सामान्यलक्षणाजन्यः साक्षात्कारः स्यादिति चेन्न । तद्बहिरिन्द्रियकरणकतद्धर्मप्रकारकज्ञानसामग्र्यन्तरस्याप्यपेक्षितत्वात् । सामग्र्यन्तरं च योग्यव्यक्तावालोकसंयोगावधिचक्षुःसंयोगमहत्वोद्भूतरूपवत्वादीति । एवं च द्रव्यचक्षुःसंयोगसत्वे बहुलतमे तमसि विद्युत्सम्पातजनिते द्रव्यचाक्षुषे तदुत्तरं न सकलद्रव्यचाक्षुषधीरिति । प्राचीनमते तु विशेष्येण सममलौकिकसन्निकर्षस्य तदिन्द्रियजन्यज्ञानस्य च सत्वान्निखिलद्रव्यचाक्षुषं स्यादिति संक्षेपः । ननु घटत्वनिर्विकल्पकोत्तरं प्रथमं घटत्वविशिष्टप्रत्यक्षोत्पत्तिकाले घटत्वसामान्यलक्षणया यावद्घटविषयकप्रत्यक्षं स्यादिति । अत्रोच्यते समवायसम्बन्धावच्छिन्नघटत्वादिविषयताशालिज्ञानत्वेन समवायसम्बन्धावच्छिन्नघटत्वाद्याश्रयत्वशालियावद्घटादिविशेष्यकप्रत्यक्षत्वेन कार्यकारणभावः । एवं सम्बन्धान्तरेणाऽपि बोध्यम् । एवं च समवायसम्बन्धावच्छिन्नघटत्वादिप्रकारकज्ञानान्न कालिकसम्बन्धेन घटत्वादिप्रकारककालिकसम्बन्धेन घटत्वाद्याश्रयकालस्य प्रत्यक्षं तथा च निर्विकल्पकस्य सम्बन्धानवगाहित्वान्न ततः सामान्यलक्ष-

णाजन्यज्ञानमिति । अथ सामान्यज्ञानस्य प्रत्यासत्तित्वे ज्ञानलक्षणप्रत्यासत्तितः कोभेद इति चेत् । अत्रोच्यते सामान्यस्य प्रत्यासत्तित्वस्थले यद्धर्मविषयकं ज्ञानं तदाश्रयाणां प्रत्यासत्तिः ज्ञानलक्षणास्थले तु यस्य ज्ञानं तस्यैव प्रत्यासत्तिर्न तदितरस्येति संक्षेपः । ननु सामान्यस्य प्रत्यासत्तित्वे प्रमेयत्वसामान्यलक्षणया घटादीनां ज्ञानसम्भवात्सार्वज्ञ्यं स्यात् । न च प्रमेयत्वेन घटादीनां ज्ञानसम्भवेपि न घटत्वादिना ज्ञानमिति वाच्यम् । घटत्वादेरपि प्रमेयात्मकत्वादिति न सामान्यलक्षणास्वीकार्येति चेन्न सामान्यं यदि न प्रत्यासत्तिस्तदानुकूलतर्कविरहदशायान्धूमादौ व्यभिचारसंशयो न स्याद् देशान्तरीयकालान्तरीयधूमज्ञानासम्भवेन तत्र व्यभिचारसंशयासम्भवात् । प्रसिद्धधूमस्य वह्निसम्बन्धावबोधनात् । सामान्यस्य प्रत्यासत्तित्वे तु सामान्यलक्षणया सकलधूमोपस्थितौ धूमान्तरे विशेषदर्शनविरहदशायां तत्र व्यभिचारसंशयसम्भवात् । न च सार्वज्ञ्याच्च व्यभिचारसंशय इति वाच्यम् । व्यभिचारसंशये धूमत्वादिप्रकारकज्ञानस्य विरोधित्वात् । प्रमेयत्वसामान्यलक्षणया धूमत्वादिज्ञानसम्भवेपि धूमत्वादिप्रकारकज्ञानासम्भवात् । तस्य च सामग्र्यभावेनाजायमानत्वात् । अत एव प्रमेयत्वेन सकलघटत्वादि ज्ञाने ऽपि घटो नवेति संशयस्यानुभवसिद्धत्वात् । अत एव न सार्वज्ञ्यमपीति संक्षेपः ॥

ननु व्याप्तिज्ञानस्यानुमितिहेतुत्वे यत्र धूमो वह्निव्याप्य इति ज्ञानं तत्राप्यनुमितिः स्यात् । न च पक्षवृत्तिधूमे व्याप्तिज्ञानं कारणं तच्चात्र नास्तीति वाच्यम् । धूमत्वेन सामान्यलक्षणाप्रत्यासत्तिभूतेन सर्वत्रैव धूमे व्याप्तिज्ञानात् । न च हेतोः पक्षधर्मताज्ञानमपि सहकारीति वाच्यम् । धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीतिज्ञानादप्यनुमित्यापत्तेः । द्रव्यत्वेन रूपेण पर्वते धूमज्ञानस्य सत्वादुच्यते, व्याप्यत्वप्र-

कारेण पक्षे हेतुनिश्चयोऽनुमितौ हेतुर्न तु व्याप्तिज्ञानमात्रं, न च धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीति ज्ञानं व्याप्यत्वेन पर्वते धूममवगाहते येन ततोऽनुमितिः स्यात्। पर्वतो वह्निव्याप्यधूमवान्नवेति संशयादनुमितिर्म्माभूदिति निश्चयपदम् ॥

यत्र महानस, इति। ज्ञानं व्याप्तिज्ञानं,। तत्रापि महानसे ऽपि,। ननु मिद्धेः प्रतिबन्धकत्वान्महानसे नानुमितिः। नापि पर्वते पर्वतीयधूमे व्याप्तिज्ञानाभावादित्यभिप्रायवान् शङ्कते। न चेति। तच्च व्याप्तिज्ञानं च,। अत्र महानसीय धूमे,। एवं वन्हिव्याप्य इति ज्ञानस्थले सर्वत्रैव धूमे पर्वतादिवृत्तिधूमे,। व्याप्यत्वेनेति। तथा च व्याप्तिप्रकारकपक्षधर्मतानिश्चयोऽनुमितौ कारणमित्यर्थः। न चेति। द्रव्यं पर्वतवृत्तीत्यत्र द्रव्यत्वेन रूपेण धूमस्यावगाहनं न तु धूमत्वेनावगाहनमित्यर्थः ॥

मीमांसकास्तु व्याप्यतावच्छेदकप्रकारकं पक्षधर्मताज्ञानं व्याप्तिज्ञाने सहकारि व्याप्यतावच्छेदकं धूमत्वं तद्रूपेण व्याप्तिग्रहान्न तु द्रव्यत्वं, न ततो द्रव्यं पर्वतवृत्तीति ज्ञानादनुमितिः। एवं च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानद्वयादप्यनुमितिरित्याहुस्तन्न, व्याप्यत्वप्रकारकपक्षधर्मताज्ञानहेतुतायां लाघवात् किं चैवं वह्निव्याप्यवानिति ज्ञानादनुमितिर्न स्याद्धूमत्वेन पक्षधर्मत्वानवगाहनात् ॥

व्याप्यतावच्छेदकमिति। न चैवं धूमो वन्हिव्याप्य आलोकः पर्वतवृत्तिरिति ज्ञानादनुमितिः स्यादालोकत्वस्यापि व्याप्यतावच्छेदकत्वादिति वाच्यम्। यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मावच्छेदेन पक्षधर्म-

ताज्ज्ञानस्य विवक्षितत्वात् । अत्रायं निर्गलितार्थः । अनुमितौ व्याप्तिज्ञानं कारणं तत्रातिप्रसङ्गभङ्गाय पक्षधर्मताविषयकत्वं देयं । तथा च व्याप्यतावच्छेदकविशिष्टपक्षधर्मताविषयकव्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन कारणतेति दिक् । ज्ञानद्वयादिति । अत्र द्वित्वं सम्पातायातं । कथमन्यथा तादृशैकज्ञानादनुमितिः । लाघवादिति । व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वोभयरूपेण कारणत्वापेक्षया व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन रूपेण हेतुतायां लाघवादित्यर्थः । न च परामर्शहेतुतावादिना ऽपि परामर्शजनकत्वेन ज्ञानद्वयस्य हेतुत्वमवश्यं वाच्यमिति वाच्यम् । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैवान्यं प्रति पूर्ववृत्तित्वग्रहणेनान्यथासिद्धत्वात् । ननु धूमत्वेन व्याप्तिज्ञानत्वं धूमत्वेन च पक्षधर्मताज्ञानत्वमिति नोभयरूपेणाकारणत्वमिति परामर्शापेक्षया नगुरुरित्याशयावानाह । किं चेति । यदि च निर्धर्मितावच्छेदकव्यभिचारज्ञानस्य विरोधित्वाभावान्निरुक्ताव्यभिचरितसामानाधिकरण्यविशिष्टधूमत्वादेरेव व्याप्तित्वात्परामर्शे नियमतो धूमत्वस्य तादृशविषयत्वं स्वीक्रियते तदा ऽपि गृह्यमाणव्याप्यवच्छेदकप्रकारकपक्षधर्मताज्ञत्वेन पक्षधर्मताग्रहप्रकारीभवद्व्याप्तिज्ञानत्वेन वेति विनिगमनाविरहो ऽपि बोध्यः । न च तवापि व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्तिज्ञानत्वेन वा परामर्शस्य हेतुत्वमिति विनिगमनाविरह इति वाच्यम् । व्याप्तिप्रकारकपक्षधर्मताज्ञानपर्याप्तविशिष्टवैशिष्ट्यविषयिताया एव कारणतावच्छेदकत्वात् । गृह्यमाणव्याप्यवच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्यतावच्छेदकप्रकारकज्ञानत्वेन वा हेतुत्वं एवं पक्षधर्मताज्ञानप्रकारीभवद्व्याप्तिज्ञानत्वेन व्याप्तिप्रकारकज्ञानविषयीभवत्पक्षधर्मताज्ञानत्वेन वा हेतुत्वमिति तव मते कार्यकारणभावचतुष्टयं बोध्यम् ॥

**तस्माद्वह्निव्याप्यवानित्येवं रूपाद्व्याप्तिविशिष्टपक्षधर्मताज्ञानात्तृतीयलिङ्गपरामर्शत्वेन प्रसिद्धा-**

द्वैवानुऽमितिः। तृतीयत्वङ्कथमिति चेत् प्रथमं दृष्टान्ते धूमज्ञानं ततो व्याप्तिज्ञानं ततस्तद्विशिष्टपक्षधर्मताज्ञानमित्येवं रूपेणेति गृहाण। तृतीयत्वं प्रायिकमित्युक्तं न तु तेन रूपेण हेतुत्वं गौरवाद्व्यभिचाराच्चेति ध्येयम् ॥

एवं व्याप्यतावच्छेदकरूपेण पक्षधर्मताज्ञानस्यव्याप्तिज्ञानसहकारित्वे नैयायिकमतमुपसंहरति । तस्मादित्यादिना । तृतीयत्वं परामर्शस्य तृतीयज्ञानत्वं । तेन रूपेण तृतीयज्ञानत्वरूपेण । ननु प्रामाणिकं गौरवं न दोषायेत्यत आह व्यभिचाराच्चेति । यत्रादौ धूमदर्शनसमय एव धूमो वह्निव्याप्य इतिज्ञानं ततो वन्हिव्याप्यधूमवानिति परामर्शस्तत्र व्यभिचारादित्यर्थः । अत्रेदं प्रतिभाति । साध्यनिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वेन हेतुतावच्छेदकावच्छिन्नपक्षधर्मनिष्टप्रकारतानिरूपितधर्मिविशेष्यताकनिश्चयत्वेन च तदुत्तरानुमितिं प्रति कारणत्वमिति तज्ज्ञानद्वयमेकं वेति मीमांसकमतं तन्न रम्यं । यत्र व्याप्यवच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताको व्याप्यंशे निर्धर्मितावच्छेदको वन्हिव्याप्यवानितिनिश्चयस्तत्रानुमित्यपलापापत्तेः । तस्मात्पर्वतत्वावच्छिन्नोदश्यकवन्हिविधेयकानुमितित्वावच्छिन्नं प्रति वन्हिव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन हेतुत्वमिति । नन्विदमसङ्गतं तथा हि तत्तद्धेतुभेदेन व्याप्यत्वस्याननुगतत्वात्तेन रूपेण हेतुं विशिष्य धूमादिघटितव्याप्यत्वेन हेतुतायां वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयमन्तरेणापि वन्हिव्याप्यालोकत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यकनिश्चयादपि पर्वतविशेष्यकवन्हिविधेयकानुमितेर्जायमानत्वाद्व्यभिचार इति चेत् । अत्र वैशेषिकाः वन्हिव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिवह्निव्याप्यधू-

मवान्पर्वत इति निश्चयत्वेन कारणता वन्हिव्याप्यधूमपर्वतत्वोभयनिष्ठध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशालिवन्हिव्याप्यधू-मवान्पर्वतो वन्हिमानित्येतादृशानुमितित्वेन कार्यता एवं वन्हिव्याप्यालो-कत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिवन्हिव्या-प्यालोकवान् पर्वत इति निश्चयत्वेन कारणता वह्निव्याप्यलोकपर्वतत्वोभ-यनिष्ठधर्मितावच्छेदकीयविषयितानिरूपितवन्हिनिष्ठविधेयताख्यविषय-ताशालिवन्हिव्याप्यालोकवान्पर्वतो वन्हिमानित्येतादृशानुमितित्वेन कार्य-तेति लिङ्गोपहितलैङ्गिकभानमावश्यकम्। न च तादृशपरामर्शस्य कार्यता-वच्छेदकं धूमवान्पर्वतो वन्हिमानित्येतादृशानुमितितत्वमस्तु किं व्याप्त्यं-शप्रवेशेनेति वाच्यम् । व्याप्तेरनन्तत्वेनेकतरव्याप्तिप्रवेशेऽपरव्याप्तिघटित-परामर्शादेकतरव्याप्तिघटितपरामर्शं विनापि तादृशानुमितेर्जायमानत्वा-द्व्यभिचारः स्यात् तथा च या व्याप्तिः परामर्शे निवेशनीया सैव व्याप्तिरनु-मितावपीति नोक्तदोषः। ननु तथापि वन्हिव्याप्यधूमपर्वतत्वोभयनिष्ठध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिविष्ठविधेयताशालिन्यां वन्हिव्या-प्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नधर्मितावच्छेदकविषय-ताशालिनिश्चयरूपपरामर्शजन्यायां वह्निव्याप्यालोकत्वावच्छिन्नप्रकारता-निरूपितवन्हिव्याप्यधूमपर्वतत्वोभयधर्मितावच्छेदकीयविषयताशालिनि-श्चयरूपपरामर्शजन्यायां वन्हिव्याप्यधूमवान्पर्वतो वह्निव्याप्यालोकवान्व-न्हिमानित्याकारिकायां वह्न्यनुमितौ व्यभिचार इति चेन्न। तत्र कार्यताव-च्छेदकविलक्षणविषयताप्रवेशेन व्यभिचाराभावात् तथा हि तादृशविषय-ताशालिवन्हिव्याप्यधूमवानित्येतादृशपरामर्शस्य वन्हिव्याप्यधूमपर्वतत्वो-भयपर्याप्तोद्देश्यतावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनु-मितित्वं कार्यतावच्छेदकं एवं तादृशविषयताशालिवन्हिव्याप्यालोकवा-न्पर्वत इति परामर्शरूपनिश्चयस्य वन्हिव्याप्यालोकपर्वतत्वोभयपर्याप्तध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनुमितित्वं का-र्यतावच्छेदकं यत्र निरुक्तविषयताशालिवह्निव्याप्यधूमवान्पर्वतो वन्हिव्या-प्यालोकवानितिपरामर्शस्तस्य कार्यतावच्छेदकं वन्हिव्याप्यधूमपर्वतत्वप्र-

न्हिव्याप्यालोकैतत्रितयपर्याप्तधर्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनुमितित्वं कार्यतावच्छेदकमिति न व्यभिचारः । इत्थं च यत्र वन्हिव्याप्यधूमवान्पर्वतो वन्हिव्याप्यालोकवानिति समूहालम्बनात्मको धूमालोकयोः परामर्शस्तेन परामर्शेण वन्हिव्याप्यधूमवान्पर्वतो वन्हिमान्वन्हिव्याप्यालोकवान्पर्वतो वन्हिमानित्याकारिकानुमितिस्तत्र वन्हिव्याप्यधूमपर्वतत्वोभयपर्याप्तया वन्हिव्याप्यालोकपर्वतत्वोभयपर्याप्तायां धर्मितावच्छेदकीयविषयतायाः सत्वात्तस्यापि संग्रह इत्याहुस्तद्वपरे न क्षमन्ते । तथा हि । यत्र पर्वतो वह्न्यभाववानिति बाधबुद्धिस्ततो वन्हिव्याप्यधूमवानित्यलौकिकः परामर्शस्ततो लौकिकसन्निकर्षवशाद्वन्हिव्याप्यधूमाभाववानिति बाधनिश्चयः लौकिकस्याप्रतिबाध्यत्वात्ततस्तेन परामर्शेनानुमितिर्जन्यते तस्या अनुमितेरसंग्रहस्तत्र प्रतिबन्धकवशाद्धूमस्याभानेन धूमपर्वतत्वोभयधर्मितावच्छेदकीयविषयताविरहादिति । किं च धूमलिङ्गकस्थले धूमालोकादिलिङ्गभेदेन परामर्शघटकीभूतव्याप्तेरनन्तत्वेन तत्र व्यभिचारतादवस्थ्यादनुमितिपरामर्शयोः कार्यकारणभावस्यानतत्वमिति । अथ निरुक्तकार्यकारणभावरीत्या लिङ्गोपहितलैङ्गिकं न ब्रूमः किन्तु प्रत्यक्षवदनुमितावप्युपस्थितयावत्पदार्थविषयत्वं तदतिमन्दं तथा हि । व्यापकं विधेयतया व्यापकतावच्छेदकं विधेयतावच्छेदकतया पर्वतादिकं पक्षतया पर्वतत्वादिकं पक्षतावच्छेदकतया भासते एतदतिरिक्तं च लाघवोपनीतं भासते ईश्वरानुमाने नित्यत्वमिव कृतौ । तथा च साध्यव्याप्यहेतुभाने नियामकाभाव इति लाघवादव्यवहितोत्तरत्वसम्बन्धेन तादृशपरामर्शवदनुमितित्वमेव कार्यतावच्छेदकमुच्यतां तथा हि । वन्हिव्याप्यधूमप्रकारकपर्वतनिश्चयत्वेन कारणत्वं स्वाव्यवहितोत्तरोत्पत्तिकत्वेन सम्बन्धेन तादृशपरामर्शवत्पर्वतत्वावच्छिन्नोद्देश्यकवन्हिविधेयकानुमितत्वेन कार्यता एवमालोकादावपि बोध्यम् । स्वाव्यवहितोत्तरत्वं च स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वं । अत्र सत्यन्तेन चतुर्थक्षणानां निरासः । स्वाधिकरणेत्यनेन पूर्वक्षणानां निरासः । इत्थं च विनश्यदवस्थपरामर्शेण तृतीयक्ष-

णोत्पत्तिकानुमितेरपि संग्रहः । निरुक्ताव्यवहितोत्तरत्वस्य द्वितीयतृतीयक्षणसाधारण्याद् एवमपेक्षाबुध्यात्मकपरामर्शेण चतुर्थक्षणोत्पादितानुमितेरपि संग्रहस्तत्र स्वपदेनापेक्षाबुध्यात्मकपरामर्शस्य ग्रहणात् । मैत्रस्य तादृशपरामर्शोत्तरं पुरुषान्तरीयतादृशपरामर्शाजन्यायां तत्कालीनान्यलिङ्गकानुमितौ व्यभिचारः । समवायेन पुरुषान्तरे धूमलिङ्गकपरामर्शाभावादव्यवहितोत्तरोत्पत्तिकत्वेति । तच्चैकाधिकरणावच्छेदेन स्वाव्यवहितोत्तरोत्पत्तिकत्वरूपं विवक्षितमिति नोक्तदोषः । न च कार्यतावच्छेदकेऽनुमितित्वप्रवेशो व्यर्थ इति वाच्यम् । तस्य व्यभिचारवारकत्वात् तथा हि । यत्र परामर्शाव्यवहितोत्तरक्षणे आत्ममनःसंयोगो जातस्तत्र तादृशसम्बन्धेन परामर्शवत्वस्य सत्वे समवायेन तत्रात्ममनोयोगाश्रये मनसि परामर्शाभावाद्व्यभिचार इति । परामर्शत्वं चानुमितिजनकतावच्छेदकतया सिद्धो मानसत्वव्याप्यो जातिविशेषः । एतेन चाक्षुषत्वादिना जातिसङ्कर इति परास्तम् । यत्र चाक्षुषादिपरामर्शस्तत्र तदनन्तरं मानसपरामर्शस्वीकारात् । क्षणनिर्णयस्य शपथानिर्णेयतया सर्वत्र मानसपरामर्शादेवानुमितिः । न च सर्वत्र स्मृतित्वव्याप्यत्वमेव स्वीक्रियत इति सर्वत्र स्मरणात्मकपरामर्शादेवानुमितिरिति वाच्यम् । तत्तदुद्बोधकानां तत्तत्स्मरणात्मकपरामर्शं प्रति हेतुत्वकल्पने गौरवात् । न चैवं भक्तित्वश्रद्धात्वाभ्यां जातिसङ्करः तयोर्मानसत्वस्वीकारादिति वाच्यम् । भक्तिश्रद्धात्मकपरामर्शे मानाभावेन भक्तित्वश्रद्धात्वयोः परामर्शत्वेन सममेकत्र वृत्तित्वाभावात्तयोर्जातित्वे मानाभावाच्चेति । आहार्यपरामर्शादनुमितेरभावादनाहार्यत्वं परामर्शे देयं । एवमप्रामाण्यग्रहाभावविशिष्टत्वमपि देयं । अन्यथा परामर्शे इदं ज्ञानं व्याप्यभाववद्धेतुविषयकमिति ज्ञानादनुमित्यापत्तिः । अप्रामाण्यग्रहाणां वैशिष्ट्यं च न विषयतया मैत्रीयतत्तदप्रामाण्यग्रहविषयाच्चैत्रीयपरामर्शादनुमित्यनुत्पत्त्यापत्तेस्तथा च तत्पुरुषीयानुमितौ विषयतासम्बन्धेन तत्पुरुषीयतत्तदप्रामाण्यग्रहाभावविशिष्टपरामर्शत्वेन हेतुतेति कार्यकारणभावकल्पने गौरवं तथापि समवायसम्बन्धावच्छिन्नतत्तदप्रामाण्यग्रहाभावानामात्मनिष्ठानां कूटस्य सामानाधिकरण्य प्रत्यासत्या वैशिष्ट्यं परामर्शे वाच्यम् ।

न च शरीरावच्छेदेन तत्तदप्रामाण्यग्रहसत्त्वेपि स्तम्भाद्यवच्छेदेन तदात्मनि तत्तदप्रामाण्यग्रहाभावानां सत्त्वादनुमितिप्रसङ्ग इति वाच्यम् । निरवच्छिन्नविशेषणतया तदभावानामात्मनिष्ठत्वस्य विवक्षितत्वादिति सङ्क्षेपः ॥

**सोऽयं परामर्शो नानुमितेः करणं व्यापाराभावात् । नापि परामृश्यमाणं लिङ्गं परामर्शव्यापारकं । भूतभाविभ्यां लिङ्गाभ्यामनुमित्यजननापत्तेः अनन्यथासिद्धनियतपूर्ववर्त्ति हि कारणं । किन्तु व्याप्तिज्ञानं साध्यज्ञानं लिङ्गज्ञानं जन्यज्ञानमात्रं वा परामर्शव्यापारकं । न चातिप्रसङ्गः व्यापारेण तन्निरासात् । ज्ञानपदं च सविषयकमात्रपरं तेन न स्मरणात्मकपरामर्शस्थले व्यभिचारः तत्र व्याप्तिविषयकसंस्कारस्य परामर्शव्यापारकस्य करणत्वात् पूर्वानुभव एव वा तत्र करणमिति संक्षेपः ।**

अथ परामर्शस्य कारणत्वे सिद्धे करणत्वमपि तस्यैव कथ्यतामित्यत आह सोयमिति । व्यापारेति । तथा च व्यापारवत्कारणं करणमिति भावः । ननु तर्हि परामर्शव्यापारकं ज्ञायमानलिङ्गमेव करणमस्तु न तु लिङ्गज्ञानं द्रव्यं पृथिवीत्वादित्यादौ ज्ञानस्य हेतुत्वकल्पने गौरवादित्यत आह नापीति कारणत्वलक्षणे ऽव्यवहितत्वांशस्याविवक्षितत्वाददृष्टलिङ्गस्य परामर्शद्वारानुमितिजनने बाधकाभावादत उक्तं भावीति । भाविनः पूर्ववृत्तित्वाभावादिति भावः । ननु भाविलिङ्गस्य पूर्ववृत्तित्वाभावे का क्षतिरित्यत आह अनन्यथेति । पूर्ववर्त्तिकारणतावच्छेदकावच्छिन्नकारणसत्वस्यैव कार्योत्पत्तिनियामकत्वम् । एवं च

भाविनः पूर्ववृत्तित्वाभावादतीतलिङ्गस्य पूर्ववृत्तित्वेपि विद्यमानत्वाभावाच्च तस्मादनुमितिरिति भावः । तर्ह्यनुमितौ किं कारणमित्यत आह किंत्विति साध्यहेत्वोर्नानात्वेप्येकसाध्यहेतुस्थलेपि व्याप्तेर्नानात्वादेकव्याप्तिविषयकज्ञानोपादाने व्याप्त्यन्तरविषयकज्ञानमादाय व्यभिचार इत्यत आह साध्यज्ञानमिति । यद्वा व्याप्तेर्बहुपदार्थघटितत्वादाह साध्येति अनुमितेरपि साध्यज्ञानात्मकत्वात्कारणत्वं तस्येत्यत आह । लिङ्गेति । लिङ्गस्य व्याप्त्याश्रयत्वेन गौरवग्रस्तत्वाल्लाघवादाह । जन्यज्ञानेति । नित्यस्य स्वरूपयोग्यस्य फलावश्यंभाव इति नियमादीश्वरस्यानुमितिः स्यादिति तद्वारणाय जन्येत्युक्तं इदं तु प्रथमादिकल्पेपि बोध्यम् । नन्वेवं घटज्ञानादिसत्वेऽपि वन्ह्यनुमितिः स्यादत आह परामर्शेति । तत्र वन्हिपरामर्शाभावादिति भावः । तदेव शङ्कते । न चेति । अतिप्रसङ्गः । घटज्ञानाद्वन्ह्यनुमितिःस्यादित्यतिप्रसङ्गः । तन्निरासात् । अतिप्रसङ्गनिरासात्, । ननु व्याप्तिज्ञानस्य कारणत्वाभावे विशेषणज्ञानरूपकारणभावात्कथं परामर्शरूप विशिष्टबोध इति चेन्न वयं व्याप्तिज्ञानं कारणमिति न ब्रूमः । किं तु व्याप्तिज्ञानत्वं न कारणतावच्छेदकं गौरवात् । अपि तु ज्ञानत्वमेवेति न दोषलेशोऽपि । ननु यत्र व्याप्तिज्ञानं ततस्तत्संस्कारः कालान्तरे स्मरणात्मकपरामर्शस्तत्र ज्ञानाभावाद्व्यभिचार इत्यत आह । ज्ञानपदमिति । सविषयकत्वं तु ज्ञानेच्छाकृतिद्वेषसंस्काराणामेव बोध्यम् । ननु सविषयत्वेन कारणत्वे मानाभावस्तदुक्तं शिरोमणिचरणारविन्दैः । इच्छादितः संस्काराच्चानुमितेरनुदयादित्यत आह पूर्वानुभव एवेति अत्रायं संक्षेपार्थः । अनुमितौ मन एव कारणं । न चानुमितेर्मनः साधारणकारणताकज्ञानत्वान्मानसत्वापत्तिरिति वाच्यम् । चिकीर्षासाधारणमनःसाधारणकारणकत्वस्य यथा न मानसत्वप्रयोजकत्वं तथा मनः साधारणकारणकज्ञानत्वस्यापि मानसत्वप्रयोजकत्वाभावात् । तर्हि मानसत्वे किं प्रयोजकमिति चेत् । मानसत्वस्य नित्यत्वेन प्रयोजकाभावात् । मानसत्वावच्छिन्नोत्पत्तौ किं नियामकमिति चेत् चाक्षुषाद्यनुमित्याद्यसाधारणसामग्र्यभावविशिष्टज्ञानजनकसामग्र्या एव प्रयोजकत्वादिति ।

नहि मनोरूपकारणतौल्ये कथमनुमितिमानसयोर्वैजात्यमिति चेत् सामग्रीवैलक्षण्यात् । तथापीन्द्रियकरणकज्ञानस्य प्रत्यक्षत्वात्कथं प्रमाणविभाग इति चेत् । क्रियावैजात्या करणवैजात्यस्य विवक्षितत्वात् । तथा चानुमितिकरणत्वादिना भेदः । एवं चैकस्योभयत्रकरणत्वेप्युपाधिभेदात्पाचकपाटकादिवद् भेद इति संक्षेपः ।

तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् तत्र केवलान्वयिसाध्यकानुमानं केवलान्वयि तत्र यो धर्मः सर्वत्र वर्तते स केवलान्वयी यथाऽभिधेयत्वज्ञेयत्वप्रमेयत्वादिः । अभिधेयत्वं भगवदिच्छारूपशब्दशक्तिविषयत्वं तच्च सर्वत्रैव वर्त्तते सर्वस्यैव भगवदिच्छाविषयत्वाद् वस्तुपदशक्यत्वाच्च । एवं ज्ञेयत्वं ज्ञानविषयत्वं तच्च सर्वत्रैवास्ति सर्वस्यैव भगवज्ज्ञानविषयत्वात् । एवं प्रमेत्वं प्रमाविषयत्वं तच्च सर्वत्रैव वर्तते सर्वस्यैव भगवत्प्रमाविषयत्वात् ।

तच्चानुमानं निरुक्तानुमानं, । तत्र तेषु मध्ये विपक्षस्य सिध्यसिद्धिव्याघातादसद्विपक्षं केवलान्वयीति लक्षणविरहात्स्वयं लक्षणमाह केवलान्वयिसाध्यकेति केवलान्वयित्वस्य हेतुविशेषणत्वे वाच्यं धूमादिन्यादेः संग्रहो न स्याद् अतः साध्यकमित्युक्तं ॥ लक्षणघटकं केवलान्वयित्वं किमित्यत आह तत्र यो धर्म इति ॥ तत्र लक्षणे सर्वत्रेति । यस्यात्यन्ताभावः कुत्रापि नास्तीत्यर्थः । तथा चात्यन्ताभावाप्रतियोगित्वं केवलान्वयिलक्षणमिति तात्पर्यार्थः । भगवदिति । अस्माच्छब्दादयमर्थो बोद्धव्य ईदृशी या भगवदिच्छा तद्रूपा या शब्दशक्तिस्तद्विषयत्वमित्यर्थः

तथापि तादृशविषयत्वस्य केवलान्वयित्वे किं मानमित्यत आह तच्चे- ति । कुत इत्यत आह सर्वस्यैवेति । ननु सर्वस्य भगवदिच्छाविषयत्वेपि तत्तत्पदार्थस्य तत्तच्छब्दशक्तिविषयत्वात्सर्वस्य कीदृशेच्छाशब्दशक्तिविषय- त्वमित्याकांक्षायामाह वस्त्विति । शक्यत्वं शक्तिविषयत्वं अयं भावः । अभिधेयत्वमभिधाविषयत्वं अभिधा शब्दशक्तिः । एवं च शब्दशक्तिविष- यत्वं सर्वस्य सिद्धम् ॥

अत्र केचित् । यत्र साध्यनिश्चयोऽस्ति तत्रानु- मितेरनुत्पत्तेः पक्षतानुमितेरङ्गं सा च साध्यवत्वेन सन्दिह्यमानत्वं न च मेयत्वेन संशयो भवितुमर्हति व्यतिरेककोटेरप्रसिद्धेरतः कथमिदमनुमानमिति तन्न । सिसाधयिषाविरहविशिष्टसाध्यनिश्चयाभावो हि प- क्षता सा चेहाप्यस्ति न तु संशयस्तेन विनाप्यनुमि- तेरानुभविकत्वात् साध्यनिश्चये सत्यप्यनुमित्सायां सत्यामनुमितेरुत्पत्तेस्तत्र पक्षतासम्पत्तये विशिष्टा- न्तं तत्र सिसाधयिषासहितसाध्यनिश्चयोऽस्ति न तु तद्विरहसहित इति संक्षेपः ॥

केवलान्वय्यनुमानं दूषयितुकामस्य मीमांसकस्य मतं दूषयितुमाह अत्र केचिदित्यादिना यत्र महानसादौ सा पक्षता । व्यतिरेकेति । अत्र प्रमेयत्वसन्देहः प्रमेयत्वविषयकः प्रमेयत्वाभावविषयकश्चेति प्रमेयत्वा- भावरूपव्यतिरेककोटेरप्रसिद्धेरित्यर्थः । इदं केवलान्वयिसाध्यकं, सिसाध- यिषेति । सिसाधयिषाविरहविशिष्टो यः साध्यनिश्चयः तदभावः पक्षते- त्यर्थः । एवं च साध्यनिश्चये सत्यपि यत्र सिसाधयिषा तत्र तद्विरहवि- शिष्टसिद्ध्यभावस्य सत्वात्पक्षता यत्र च न साध्यनिश्चयः सिसाधयिषा- पि न तत्रापि विशिष्टाभावस्य सत्वात्पक्षतेति । सिसाधयिषा तु प्रकृत-

साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा अत्र पर्वतो वन्हिमानिति सिद्धिसत्वे तेजः सध्यकपर्वतपक्षकानुमितिर्जायतामितीच्छायामपि पर्वतो वन्हिमानित्यनुमितिः स्यादतः साध्यतावच्छेदकावच्छिन्नेति । पाषाणमये वह्न्यनुमितिर्जायतामितीच्छायामपि पर्वतो वह्निमानिति सिद्धिसत्वे पर्वतो वन्हिमानित्यनुमितिः स्यादतः पक्षतावच्छेदकावच्छिन्नेति । सिद्धिसत्वे यत्किञ्चिज्ज्ञानं जायतां प्रत्यक्षाद्व्यतिरिक्तं ज्ञानं जायतामितीच्छायामपि वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानिति सिध्यात्मकपरामर्शे सत्यनुमित्युत्पत्ते स्तादृशेच्छाया उत्तेजकत्वमित्येवमननुगम इति अत्रोच्यते । साध्यनिश्चये सति यादृशेच्छासत्वे ऽनुमितिस्तादृशेच्छाविरहसमुदायविशिष्टसाध्यनिश्चयाभावः पक्षतेत्यनुगमान्न क्षतिः । अथ पक्षतावच्छेदकसामानाधिकरण्येनैकत्र पर्वते साध्यसिद्धावनुमित्सामन्तरेण यदि पर्वतत्वधर्मितावच्छेदिकानुमितिरनुभवसिद्धा तदा तद्धर्मितावच्छेदककसाध्यनिश्चयस्तद्धर्मितावच्छेदककानुमितौ विरोधी वाच्यः । यदि च तत्र नानुमितिस्तदा पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति सिद्धिमात्रं विरोधि । तत्सामानाधिकरण्येनानुमितेरनुदयात् । पक्षतावच्छेदकावच्छेदेनानुमितिं प्रत्यवच्छेदकावच्छेदेन सिद्धिः प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेरुत्पत्तेः । अत्र साध्यतावच्छेदकसम्बन्धमात्रपर्याप्तसंसर्गताकपक्षतावच्छेदकविशिष्टविशेष्यकानुमितौ साध्यतावच्छेदकसम्बन्धमात्रपर्याप्तसंसर्गताकपक्षतावच्छेदकविशिष्टविशेष्यकसाध्यसिद्धिः प्रतिबन्धिका इयं तु पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धपर्याप्तसंसर्गताकपक्षतावाच्छेदकविशिष्टपक्षविशेष्यकानुमितावपि प्रतिबन्धिका इयं चावच्छेदकावच्छेदे नानुमितिरिति संक्षेपः । इहापि प्रमेयत्वादिसाध्यकानुमितावपि विशिष्टान्तस्य कृत्यमाह साध्येति । संक्षेप इति । अत्रायं संक्षेपार्थः । अनुमितिं प्रति पक्षतायाः केन रूपेण कारणत्वं । न तावत्समवायसम्बन्धावच्छिन्नप्रतियोगिताकात्मनि

ष्टसिद्ध्यभावः कारणं आत्मनि सिद्धिसत्त्वेऽपि समवायेन सिद्धेरव्याप्यवृत्तितया घटाद्यवच्छेदेनात्मनि सिद्ध्यभावस्य सत्वादनुमित्यापत्तिः सिद्धिसत्वेऽपि समवायेन सिद्ध्यभावस्य शरीरे सत्वादनुमित्यापत्तिश्चोच्यते । अवच्छेदकतासम्बन्धावच्छिन्नसिद्ध्यभावः स्वरूपसम्बन्धेन शरीरनिष्ठतया हेतुः । स्वरूपसम्बन्धेन शरीरनिष्ठत्वं च सिद्धिसत्वेऽपि कालिकसम्बन्धेन शरीरे सिद्ध्यभाववारणाय । अथ समवायसम्बन्धावच्छिन्नसिद्ध्यभावोऽवच्छेदकतासम्बन्धेन शरीरनिष्ठतया कारणमित्येवोच्यतामिति चेत् सिद्धिसत्वे तच्छरीरावच्छेदेनात्मान्तरे सिद्ध्यभावस्य सत्वादनुमित्यापत्तेरिति दिक् ॥

असत्सपक्षः केवलव्यतिरेकी । तत्वं च पक्षातिरिक्तेऽनिश्चितसाध्यसाधनयोः सहचारकत्वं तथा हि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वाद्यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथाजलं । न च नेयं पृथिवी तस्मादितरेभ्यो भिद्यत इति व्यतिरेकिलक्षणमुदाहरन्ति । न च पक्षातिरिक्ते जलादौ साध्यसाधनयोः साहचर्यमस्ति निश्चयते वा । न चानिश्चितसाध्यकत्वमेव सम्यक् । घटादौ साध्यस्येतरभेदस्य प्रत्यक्षत एव निश्चितत्वादन्यथा साध्याप्रसिद्धौ तद्घटितव्याप्तिनिरूपणानापत्तेः । न च घटे साध्यनिश्चये तस्य क्व पक्षत्वमिति वाच्यम् । पृथिवीत्वावच्छेदेन साध्यनिश्चयस्यैव तदवच्छेदेन पक्षताविरोधित्वान्नचेह सोऽस्ति सर्वत्र पृथिव्यां तन्निश्चयाभावात् । अत्र च व्यतिरेकसहचारादुक्ता व्याप्तिर्गृह्यत इति प्राहुः ॥

असत्सपक्ष इति । निश्चितसाध्यसाधनसहचारशून्य इत्यर्थः ।

ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यत्रेतरभेदस्य घटे विनिश्चित-त्वाद्घटस्तत्र सपक्षः तथा च पृथिवीत्वहेतावव्याप्तिरित्यत आह तत्वं चेति पक्षातिरिक्त इति । घटस्य तु पक्षान्तर्गतत्वान्नाव्याप्तिरिति भावः । उपनयं दर्शयति । नचेयमिति । इतरेभ्यो जलादिभ्य इयं पृथिवी न भिद्यत इति नेत्यर्थः । निगमनं दर्शय । तस्मादिति । तस्मात् इत-रभेदव्याप्यपृथिवीत्ववत्त्वात् । लक्ष्ये लक्षणं लापयति । न च पक्षेति पक्षातिरिक्तस्यैव सपक्षत्वान्न चाऽनिश्चितेति । अनिश्चितसाध्यसहचा-[illegible] । [illegible]इति । तथा च पक्षातिरिक्तत्वनुदानेऽव्याप्तिरिति भावः । ननु घटादाविंतरभेदः पूर्वं न निश्चित इत्यत आह अन्यथेति । [illegible]सिद्धौ इतरभेदरूपसाध्यासिद्धौ तत् साध्यं । नन्वेवं सन्दिग्धसा-[illegible] तस्य कथं घटे सम्भवतीत्याह न चेति । तथा च पक्षे साध्य-सिद्धौ अनुमितिरिति भावः । पृथिवीत्वेति । तथा चात्र पक्षतावच्छेद-कावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादिति भावः । इह इतरभेदानुमाने स पृथिवीत्वावच्छेदेन इतरभेदनिश्चयः । व्यतिरेकव्याप्तिज्ञानजन्यानुमिति-स्थलेऽन्यभिप्रायवतां मतमाह क्वचेति । व्यतिरेकसहचारात् साध्याभाव-हेत्वभावयोः सहचारादित्यर्थः उक्ता व्याप्तिरन्वयव्याप्तिः । अत्र प्राचामय-माशयः । व्यतिरेकव्याप्तिज्ञानमात्रजन्यानुमितौ व्यभिचारः । अन्वयव्या-प्तेरेव मुख्यव्याप्तिपदव्यवहारविषयतया तस्या एवानुमितिकारणत्वात् । न च विनिगमकाभावाद्व्यतिरेकसहचारादेवान्वयव्याप्तिर्गृह्यतामिति वाच्य-म् साध्याभावहेत्वभावयोर्व्याप्तिग्रहात्साध्यानुमितेरापादयितुमशक्यत्वा-त् अन्यथा धूमवह्न्योर्व्याप्तिग्रहाद्घटानुमितिरपि कुतो न स्यात् । अथ तद्धे-तुसाध्यभेदेनान्वयव्याप्तेर्भिन्नत्वादेकोपादानेऽपरव्याप्तिज्ञानजन्यानुमिता-वव्याप्तिरिति चेत् । अत्रोच्यते । यावता हेतुसमानाधिकरणेत्यादिनिरु-क्तान्वयव्याप्तिलक्षणवाक्येन निखिलानां हेतूनां निखिलानां साध्यानामु-[illegible]निखिलानामन्वयव्याप्तीनामुपस्थापनं । एवं पक्षपदादिना निखिलानामनुमित्याश्रयाणामिति निखिलायाः पक्षधर्मतायाः प्रतिपादनेन निखि-

त्वावच्छेदेन पाण्डुरत्वायोगो व्यवच्छिद्यते। क्रियासङ्गतस्यैवकारस्यात्यन्तायोगव्यवच्छेदे शक्तिः यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलभवनात्यन्तायोगो व्यवच्छिद्यत इति । अत्राय निष्कर्षः । क्रियासङ्गतस्थलेपि नात्यन्तायोगव्यवच्छेदोऽर्थः । किंत्वयोगव्यवच्छेद एव परं तु पदार्थतावच्छेदकसामानाधिकरण्येनान्वयः । सरोजं नील भवत्येवेत्यादौ सरोजत्वसामानाधिकरण्येन नीलभवनायोगव्यवच्छेद एव भासते । कुत्रचित्क्रियासङ्गतस्थलेपि पदार्थतावच्छेदकावच्छेदेनायोगव्यवच्छेद एव । यथा ज्ञानमर्थं गृह्णात्येवेत्यादौ ज्ञानत्वावच्छेदेनार्थग्राहकत्वायोगव्यवच्छेद इति । तथा यत्र पदार्थतावच्छेदकसामानाधिकरण्येनान्वयस्तत्रात्यन्तायोगव्यवच्छेद इति गीयते । एव चात्यन्तायोगव्यवच्छेदे शक्तिरिति तु निर्युक्तिकप्रवादमात्रम् । इत्थं च सामानाधिकरण्येनान्वये क्रियाविशेषयोगादेर्नियामकत्वमिति शिरोमणिमतं सङ्गच्छते । अत एव ज्ञानं रजतं गृह्णात्येव द्विजो वेदानधीत एवेत्यादौ सामानाधिकरण्येन प्रयोगो निःप्रत्यूहः। ज्ञानत्वाद्यवच्छेदेन रजतत्वादिग्राहकत्वायोगव्यवच्छेदाभावात् । वस्तुतस्तु शङ्खः पाण्डुर एवेत्यादौ पाण्डरत्वादेरेकदेशनया योगेनान्वयायोगाच्चायोगव्यवच्छेदोऽर्थः । परमार्थतस्तु सर्वत्रान्ययोगव्यवच्छेद एवार्थः । ज्ञानमर्थं गृह्णात्येवेत्यादौ निरूपितत्वं द्वितीयार्थः । आश्रयत्व लक्षणया आख्यातार्थः । तथा च ज्ञानमर्थनिरूपितविषयिताश्रयान्यत्वाभाववदित्यन्वयबोधः । परे तु ज्ञानमर्थं गृह्णात्येव नीलं सरोजं भवत्येव जातिमद्द्रव्य भवत्येवेत्यादौ तिङो धर्मिपरतयार्थग्राहकान्ययोगो नीलभवनान्ययोगो नीलान्ययोगो वा जातिमदन्ययोगो वा व्यवच्छेद्य इत्याहुः । अत्रान्ययोगव्यवच्छेदे कथ शक्तिः । सर्वेषां सर्वतोऽन्यतयाऽसिद्धत्वादिति चेत् । उच्यते । भावप्रत्ययवदत्रापि खण्डशः शक्तिस्वीकारात् । तथा हि । अन्यस्मिन्योगे व्यवच्छेदे चेति। यदि च योगेपि सयुक्तत्वसमवेतत्वतादात्म्यभेदेन नानैव शक्तिरिति सूक्ष्ममिक्षते । तदान्यस्मिन्व्यवच्छेदे च शक्तिरुच्यतां योगांशे तु लक्षणैवेति। पार्थ एव धनुर्धर इत्यत्र पार्थो धनुर्धरः

पार्थान्यो न धनुर्द्धर इति । शङ्खः पाण्डुर एवेत्यादौ शङ्खः पाण्डुरः पाण्डु
रान्यतादात्म्याभाववानित्यादिबोधः । एवं शीत एव स्पर्शो जलवृत्ति
त्यत्र जलवृत्तिः शीतस्पर्शः शीतान्यस्पर्शभिन्नश्च । पृथिव्यामेव ग
इत्यत्र पृथिव्यां गन्धः पृथिव्यन्यसमवेतत्वाभाववान् । चैत्रो जलमेव भु
इत्यत्र चैत्रो जलं भुङ्क्ते जलान्यन्न भुङ्क्ते इति । वह्निमत्येव धूम इत्य
वह्निमति धूमो वह्निमदन्यसंयुक्तत्वाभाववानिति बोध इति । एवं
वह्निमत्येवाकाशं पृथिव्यामेवाकाशमित्यादयो न प्रयोगाः । वह्निमद
संयुक्तत्वव्यवच्छेदस्य पृथिव्यन्यसमवेतत्वव्यवच्छेदस्य वाकाशे सत्त्वे
वह्निमद्वृत्तित्वस्य पृथिवीवृत्तित्वस्य वाकाशे विरहाच्च दोषः । अन्यनि
न्योगव्यवच्छेद इति अन्ययोगस्य वाव्यवच्छेद इति भेदेनान्ययोगव्यवच्छे
दोऽपि द्विविधः । एवं च पृथिव्यामेव गन्ध इत्यत्र पृथिव्यन्यो गन्धाभा
वान् गन्धः पृथिव्यन्यसमवेतत्वाभाववानिति द्विविधबोधोऽपि सूपपन्नः
जातिमत्येव सत्त्वेत्यादौ जातिमदन्यः सत्ताभाववानिति बोधः । जाति
दन्यसमवेतत्वाभावस्याप्रसिद्धेरित्युक्तदिशा सुधीभिर्विभाव्य बोध्यमि
संक्षेपः । अत्रेदं बोध्यं नीलं सरोजं भवत्येवेत्यादावयोगव्यवच्छेदस्येवान
योगव्यवच्छेदस्यापि सामानाधिकरण्यमात्रेण बोधः । ज्ञानमर्थग्राह
भवत्येवेत्यादौ तु ज्ञानत्वावच्छेदेनार्थग्राहकान्यत्वव्यवच्छेदः । ननु नी
सरोजं भवत्येवेत्यत्र सामानाधिकरण्येन ज्ञानमर्थग्राहकं भवत्येवेत्यत्र त
वच्छेदकावच्छेदेनान्वय इत्यत्र किंनियामकमिति चेन्न । तत्तत्समभिव्या
हारविशेषस्यैव तत्र नियामकत्वात् । एवं च सामानाधिकरण्यमात्रेण
न्वयबोधे क्रियाविशेषयोगादेर्नियामकत्वाद् अवच्छेदकावच्छेदेनान्वयबो
त्वेवकारस्यैव हेतुत्वमिति दिक् । अथवाऽन्ययोगव्यवच्छेदे न शक्तिः
पार्थ एव धनुर्द्धर इत्यादौ पार्थान्ययोगस्य पार्थान्ययोगत्वावच्छिन्नप्रतियो
गिताकत्वसंसर्गेण व्यवच्छेदेऽन्वयात् । न च तादृशसंसर्गलाभः कथ
मिति वाच्यम् । रक्तो दण्डो नास्तीत्यादौ रक्तोपहितस्य दण्डादेर्नञर्थे न्व
यात् । उक्तदण्डत्वावच्छिन्नप्रतियोगिताकत्वस्येव पार्थान्ययोगत्वावच्छि

प्रतियोगिताकत्वस्य व्युत्पत्तिलभ्यत्वात् । अथैवमन्ययोगपदार्थैकदेशेऽन्यत्वे पार्थपदार्थस्य कथमन्वयः पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति व्युत्पत्तेरिति । इतरथा लोमवत्साङ्गूलवतः पशुपदार्थस्यैकदेशेन लोम्ना सहान्वयात्पशुर्न पशुरित्यादेरपि योग्यतापत्तेरिति चेत् क्वचिदव्युत्पत्तिवैचित्र्यादेकदेशान्वयस्वीकारात् । अत एव दण्डात्पृथगित्यादौ पदार्थैकदेशे पृथक्त्वादौ अवधित्वादेः पदार्थांतरस्यान्वयः । अथ तथापि नामार्थप्रकारकबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वान्नामार्थस्य पार्थादेः कथमन्यत्वेन भेदान्वयः । अन्यथा पार्थो घट इत्यादिप्रयोगापत्तेरिति चेन्न । नामार्थप्रकारकनिपातार्थातिरिक्तविशेष्यकबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वात्कल्प्त्ते च निपातार्थनामार्थयोर्भेदान्वये बाधकाभावात् । विवेचयिष्यन्ते चेदमुपरिष्टात् । अन्ये तु रूपेण पृथिव्यां वर्त्येत एवेत्यत्र पृथिनिरूपितवृत्तित्वायोगव्यवच्छेद एवार्थः । न तु पृथिविवृत्तित्वान्यत्वव्यवच्छेदो रूपवृत्तिरित्यर्थः तस्य बाधितत्वात् । एवं ऋतौ स्वदारान्गच्छेदेवेत्यादौ ऋतुकालावच्छिन्नाधिकरणताकः स्वदारगमनायोगव्यवच्छेद इष्टसाधनमित्यर्थात्सर्वत्रायोगव्यवच्छेद एवैवकारार्थोऽस्तु । न चैवं ऋत्वन्तरे स्वदारगमने प्रवृत्तिर्न स्याद्यत्किञ्चिदृतौ गमने ऋत्वन्तरे स्वदारगमनाभावेप्यतादृशविध्यर्थसम्भवादिति वाच्यम् । ऋतु कालीनगमनाभावस्य प्रत्यवायजनकतया प्रत्यवायान्तरपरिहारार्थं ऋत्वन्तरगमने प्रवृत्तेः । अत्रेष्टप्रत्यवायाभावस्तत्साधनत्वमेवकारार्थोऽन्वेति । यद्वा ऋतुकालीनस्वदारगमनमिष्टसाधनत्वायोगव्यवच्छेदवदित्यर्थस्तदेष्टसाधनत्व प्रत्यवायसाधनीभूताभावप्रतियोगित्वमिति। न च तथा ऽपि ऋत्वन्तरगमने प्रवृत्तिर्नस्यादिति वाच्यम् । तत्तदृतुकालावच्छिन्नस्वस्वदारकर्मकस्वकर्तृकगमनाभावस्य प्रत्यवायहेतुतया तत्र प्रवृत्तिसम्भवादित्याहुः । तत्रधातोर्वृत्तिमति लक्षणया पृथीवीवृत्त्यन्यत्वव्यवच्छेदस्य रूपेणेति तृतीयायास्तादात्म्यार्थत्वे तु पृथिवीवृत्त्यन्यतादात्म्यस्य वा लाभात् । ऋतुकालीनतत्तद्गमनमिष्टसाधनान्यत्वव्यवच्छेदवदित्यर्थाच्च दोषलेशोपीति सत्येयः । तर्कार्णवे

विमनवस्वलाये पश्यन्तु ते ग्रन्थममुं मदीयम् ॥ यतो निदेशाच्चि निरीक्ष्य मूकोऽपि गीर्वाणगुरूपमेयः ॥ श्रीः ॥

**अथ शब्दो निरूप्यते तत्र शाब्दप्रमितिक शाब्दः शाब्दत्वं च शब्दात्प्रत्येमीत्यनुभवसिद्धो ॰ तिविशेषः । जन्यशब्दधीजन्यत्वव्यभिचार्यनुभव॰ व्यापकजातिशून्यत्वे सति पदविषयकत्वाव्यभि॰ रिजातिशून्यधीत्वं वा ।**

निधाय शङ्करं देवं रामकृष्णं गुरुं हृदि ।
नय निर्णय मञ्जर्य्याः शब्दव्याख्या वितन्यते ॥ १ ॥

शब्दशब्यशक्तियाहकप्रत्यक्षादिप्रमाणोपजीवकत्वात्तन्निरूपणान शब्दनिरूपणमारभते ॥ अथेति । प्रत्यक्षादिनिरूपणानन्तरं वर्त्तमानं पद्यविषयः शब्द इत्यर्थः । वस्तुतस्तु सङ्गतेरनन्तराभिधानव्याप्य॰ भावादिच्छैव नियामिकेति । "आप्तोपदेशः शब्द" इति सूत्रं त॰ देशः शाब्दज्ञानमित्याप्तो यथार्थोपदेशो यस्मादित्यर्थे मनसि नि॰ याह शब्द इति । शब्दप्रमाणमित्यर्थः । मणिकारचरणास्तु प्रयोग भूतार्थतत्वज्ञानजन्यः शब्दः शब्दप्रमाणम् । अत्र वाक्यार्थज्ञानं विना क्यरचनारूपप्रयोगाभावादर्थतत्वज्ञानमाकाङ्क्षायोग्यतासन्निधिमत्पदव ात्मकवाक्यरचनारूपप्रयोगे हेतुस्तथा च प्रयोगहेतुभूतं तज्जननानु॰ सहकारिविशिष्टं यत्स्वार्थतत्वज्ञानं तज्जन्यो यः शब्दः स प्रमाणशब्द अत्र घटःकर्मत्वमानयन कृतिरित्यादिनिराकाङ्क्षेऽतिव्याप्तिवारणाय प्र भूतहेतुभूतेति । अप्रयोगेऽतिव्याप्तिवारणाय तत्वपदं । आनुपूर्व्यामति ॰प्तिवारणाय शब्दपद । न चायोग्येऽतिव्याप्तिः । तत्र प्रयोगहेतुभूत तत्वज्ञानरूपेश्वरज्ञानजन्यत्वादिति वाच्यम् । अर्थपदेन स्वार्थस्य विव॰ क्षितत्वात् । तथा च स्वार्थत्वस्य स्वज्ञाप्यार्थत्वस्य विवक्षितत्वात्र तत्व वैयर्थ्यं । अथ विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्राव्याप्तिः ।

शब्दप्रमाणत्वन्तस्य नेति वाच्यम् । प्रमितिजनकत्वेन तस्य प्रमाणत्वात् । इतरथा तस्य प्रमाजनकत्वेन प्रमाणान्तरत्वापत्तिरिति चेन्नैवम् । यत्र विमलं जलमित्यश्रुत्वैव नद्याः कच्छे महिषश्चरतीति शृणोति तत्राका-ङ्क्षादेः सत्त्वादित्याहुः ॥ अत्र शाब्दत्वं शब्दजन्यप्रमात्वं शाब्दत्वं च शब्द जन्यप्रमितिकरणत्वमित्यन्योन्याश्रय इत्यत आह शाब्दत्वमिति । तथा चैतादृशानुव्यवसायो हि जातिविशेषावच्छिन्नमवलम्बते स च जातिवि-शेषः शाब्दत्वमिति भावः । ननु शब्दात्प्रत्येमीत्यनुव्यवसायोऽप्यनुमिति-त्वावच्छिन्नमेवालम्बते न तु शाब्दत्वावच्छिन्नं तथा हि गामानयेत्या-दि पदानि तात्पर्यविषयवृत्तिस्मारितपदार्थसंसर्गप्रमपूर्वकाणि आकाङ्क्षायो-ग्यतासत्तिमत्पदकदम्बत्वादित्यनुमानादेव शाब्दबोधाभिमतमिद्धिर्भवि-ष्यतीत्यतोऽनुमितिभेदघटित शाब्दत्वमाह जन्येत्यादि । यद्वाः शाब्द इतरेभ्यो भिद्यते शाब्दत्वाद् इत्यत्र हेतुपक्षतावच्छेदकयोरैक्यात् सिद्ध साधनमित्यत आह जन्येत्यादि । जन्या या पदधीस्तज्जन्यत्वव्यभिचारिणी याऽनुभवत्वाव्यापिका जातिः प्रत्यक्षत्वमनुमितित्वं च । पदविषयकत्वा-व्यभिचारिणी जातिरुपमितित्वं । उपमितेरयङ्गवयपदवाच्य इत्याकारकत्वेन पदविषयकत्वात्तादृशजातिशून्यत्वं शाब्दबोध एवेति ।

सत्यन्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय । तत्र तादृशीनां प्रत्यक्षत्वादिजातीनां सत्त्वात् । जा-तिशून्यत्वमनुभवत्वाव्यापकजातिशून्यत्वं चासम्भवि अनुभवत्वादीनां तदव्यापकशाब्दत्वस्य च सत्त्वात् । जन्यपदधीजन्यत्वव्यभिचारिजातिशून्यत्वमपि तथा तादृशानुभवत्वादीनां सत्त्वात् पदधीजन्यत्वव्यभिचा-र्यनुभवत्वाव्यापकजातिशून्यत्वं चानुमितावपि अनु-मितित्वस्य भगवत्पक्षधीजन्यत्वाव्यभिचारित्वादतः

समुदितमुपात्तम् । उपमितावतिव्याप्तिवारणाय श्रु
न्यान्तम् । जात्यादावतिव्याप्तिवारणाय धीपदम् ।

तत्र प्रत्यक्षादिप्रमाया । तादृशीना जन्यपदधीजन्यत्वव्या
च ऽनुभवत्वाव्यापकजातीनां । पृथग्व्यावृत्तिमाह जातिशून्यत्वमित्यादि
नद्व्यापकेति अनुभवत्वाव्यापकेत्यर्थः । तथा असम्भवि । तादृशानु
शब्दादीना जन्यपदज्ञानजन्यत्वव्यभिचारिजातिरूपानुभवत्वादीनां ।
न्यात् शाब्दबोधे सत्त्वात् । प्रत्यक्षत्वस्य पदधीजन्यत्वाभाववद्धीश्व
ज्ञानवृत्तित्वेन प्रत्यक्षे निरुक्तजातिशून्यत्वाभावादनुमित्यादावपीत्युक्त
समुदितं सत्यन्तपूर्णं । उभयत्र जातिपदं समवायेन जातिशून्यत्व
भाय तेन प्रत्यक्षत्वादेरुपमितित्वस्य च कालिकसम्बन्धेन शाब्दबो
वृत्तित्वेऽपि न क्षतिः ।

सोऽयं शब्दः सकलजनानुभवसिद्धो दुरपह्नु
स्तज्जनकत्वमपि तथा । आगोपालाङ्गनमाचैवपरि
चैववाक्यादमुमर्थं प्रत्येमीति प्रतीतेः । केवलमनु
नविधयाऽन्यथावेति विप्रतिपद्यन्ते । तत्रानुमानवि
धयैति वैशेषिकाः ।

ननु शब्दो न प्रमाणं प्रमारूपफलानुपधायकत्वात् । न
शब्दो न प्रमाणमिति वाक्यस्य प्रामाण्ये शब्दस्य प्रामाण्य रि
मेव एतद्वाक्याप्रामाण्ये स्वस्याप्रामाण्यबोधकवाक्यस्याप्रामाण्याद
माण्यरूपविषयबाधात्स्वस्य प्रामाण्य तथा च सुतरां शब्द
प्रामाण्यमिति वाच्यम् । शब्दो न प्रमाणमित्यस्य प्रमित्यज
इत्यर्थात् । तथा चानुपदवक्ष्यमाणानुमानविधया शब्दस्य प्रमा
मिति वैशेषिकमतमभिसन्धाय तन्मतं निराकर्तुं स्वमतमुररीकर्तुं भूमि
मारचयति । सोऽयमित्यादिना दुरपह्नवः चैत्रशब्दो मया ज्ञात

प्रतीतिरिति शेषः । तथा च तादृशप्रतीतेः सत्वाच्छब्दो न निराकर्तुं शक्य इत्यर्थः । तज्जनकत्वं शब्दजनकत्वं । यथा निराकर्तुमशक्यं । अथ शब्दस्य शाब्दबोधजनकत्वे निखिललोकानुभवरूपं प्रत्यक्षं प्रमाणं दर्शयति आगोपालेति । ननु गोपालानुभवान्न वस्तुसिद्धिरित्यत आचेति । आपण्डितं चेत्यर्थः । तत्र विवादाङ्गसंशयजननीं विप्रतिपत्तिमाह । केवल-मिति । अन्यथा स्वातंत्र्येण । अथ शब्दो न मानान्तरं पदार्थसंसर्गस्या-नुमानादेव सिद्धिरिति वैशेषिकमतमाह तत्रेति ॥ तेषामयमाशयः दण्डेन गामभ्याजेति पदानि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिपदानि वा तात्पर्यविषयवृत्तिस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यता सत्तिमत्पदकदम्बकत्वात् घटमानयेत्यादिपदकदम्बवत् ॥ तात्पर्यविषयो यो वृत्तिस्मारितपदार्थसंसर्गस्तज्ज्ञानपूर्वकाणीत्यर्थः ॥ अत्र तात्पर्यविष-येण दण्डस्य कर्मत्वादिनार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गविशेष-णम् । न च दण्डकर्मत्वयोरपि संसर्गस्य प्रत्येकं तात्पर्यविषयत्वात्तद्दोषतादव-स्थ्यमिति वाच्यम् । कर्मत्वपदार्थे दण्डपदार्थान्वयतात्पर्यस्याविवक्षित-त्वात् । न च सैन्धवमानयेत्यादौ प्रथमं तुरङ्गबोधे तात्पर्यं पश्चाच्च लवणबोधे तत्र प्रथमं लवणबोधेनार्थान्तरं स्यादिति चेत् । अव्यवधानेन तात्पर्यविषयकत्वस्य विवक्षितत्वात् । यत्र तुरङ्गलवणोभयोपस्थापकं सैन्ध-वमानयेत्युक्तं तत्रोभयत्रापि प्रकारान्तरेण तात्पर्यग्रहः लवणस्येव स्मृतिः-स्तत्रास्मारिततुरङ्गसंसर्गसिद्ध्यार्थान्तरवारणाय स्मारितेति । न च यत्र सैन्धवपदादव्यवधानेन लवणस्मृतिस्तत्राव्यवधानेन लवणसंसर्गसिद्ध्यार्था-न्तरत्वमिति वाच्यम् । अव्यवधानेन स्मारितत्वस्य विवक्षितत्वात् । वस्तु पदात्समवायेनोपस्थापिते गगनत्वेन गगने तत्र गगनत्वेन संसर्गसिद्धिवार-णाय वृत्त्येति । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ योग्यासत्त्यो राजपुरुषपदयोस्तात्पर्यविषयसंसर्गज्ञानपूर्वकत्वाभावेन साध्याभाववत्त्वाद्-व्यभिचार इति हेतावाकाङ्क्षेति । वह्निना सिञ्चतीत्यादौ सेकपदार्थे वह्नि-करणत्वपदार्थस्यान्वयाभावेन व्यभिचार इति योग्येति । यत्र प्रथम

तुरङ्गबोधे पश्चाल्लवणबोधे तात्पर्यं तत्र प्रथमं लवणसंसर्गमादाय व्यभिचार इत्यासत्तिपदम् अव्यवधानेन पदार्थबोधतात्पर्यकपदोच्चारणपरम् । आकाङ्क्षादीनां च ज्ञानं शाब्दबोधे हेतुः । अन्यथा तद्भ्रमाच्छाब्दभ्रमानुपपत्तेः । तथा च पदार्थसंसर्गस्यानुमानादेव सिद्धेः शब्दो न प्रमाणमिति तदपरे न क्षमन्ते । तथा हि । इष्टतावच्छेदकप्रतियोगिकपुरोवृत्त्यनुयोगिकार्यताज्ञानत्वेन प्रवर्त्तकत्वं न तु तज्ज्ञानज्ञानत्वेन गौरवादिदं रजतमिति ज्ञानजन्यप्रवृत्तौ व्यभिचाराच्चेति । नन्वर्थज्ञानज्ञानमर्थज्ञानं भवत्येवेति चेन्न । तथा सति रजतत्वं समवाय इतिज्ञानादपि प्रवृत्त्यापत्तिः । प्रमेयवदितिज्ञानादपि च रजतार्थिनः प्रवृत्त्यापत्तिरिति दिक् । नन्वेते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्तः आकाङ्क्षायोग्यतासत्तिमत्पदस्मारितत्वादित्यनुमानाद्विशिष्यपदार्थसंसर्गसिद्धिः । यद्यदाकाङ्क्षावत्पदस्मारितं भवति तत्तत्पदार्थसंसर्गवद्भवतीति व्याप्तिलाभाय मिथः पदम् । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपुरुषयोः तात्पर्यविषयसंसर्गाभावेन व्यभिचारवारणाय हेतावाकाङ्क्षेति । सेकपदार्थे वह्निकरणत्वपदार्थसंसर्गाभावाद्व्यभिचार इति योग्यतेति । येन संसर्गेणान्वयबोधे तात्पर्यं तेन संसर्गेण योग्यतालाभायासत्तिपदम् । तथा च ब्राह्मणे विद्येत्यादौ यत्र विद्यात्वावच्छिन्नसंसर्गे तात्पर्यं तत्र विद्यात्वसामानाधिकरण्येन संसर्गस्य न योग्यत्वमिति । स्वरूपसदाकाङ्क्षादेः सत्त्वे शाब्दबोधानुदयात्तद्भ्रमाच्छाब्दभ्रम इति आकाङ्क्षादिज्ञानस्य शाब्दबोधे हेतुत्वमवश्यं वाच्यं तथा चाकाङ्क्षादिमत्पदस्मारितत्वरूपहेतुज्ञानात्तल्लिङ्गकानुमितिरेवभविष्यतीति चेन्न । योग्यतायाः संशयनिश्चयसाधारणज्ञानस्य हेतुत्वेन तत्संशयेऽपि शाब्दबोधात्तद्घटितलिङ्गनिश्चयाभावेनानुमित्यनुत्पत्तेः । अथ धूमोऽयमालोकोवेति संशयाद्व्ययानुमितिस्तथास्त्विति चेन्न तत्रोभयस्मिन्नपि व्याप्तिनिश्चयसत्त्वेनान्यतरस्य पक्षे निश्चये व्याप्तिविशिष्टपक्षधर्मतानिश्चयादनुमितिः अत एव धूमोऽयं धूलीपटलं वेति संशयान्नानुमितिः । अपि च प्रत्यक्षादिना संसर्गनिश्चयेऽपि शाब्दबोधो जायत एव । अनुमितिं प्रति

तु सिद्धेर्विरोधित्वेन भवन्मते सा न स्यात्। न च सिद्धेः शाब्दबोधोय-भिन्नानुमितिविरोधित्वमिति वाच्यम्। तत्प्रकारकानुमितित्वावच्छिन्नं प्रति तत्प्रकारकसिद्धित्वस्यैव लाघवेन प्रतिबन्धकतावच्छेदकत्वादिति। किं च श्रोतव्य इत्यत्र श्रवणस्यानुमित्यात्मकमननभिन्नतयोपदेशाच्छाब्दबोधस्यानुमितिभिन्नत्वे श्रुतेरपि भार इति संक्षेपः। जरन्मीमांसकास्तु। अयं वक्ता प्रकृतवाक्यार्थयथार्थज्ञानवान् आप्तत्वादिति वक्तृवाक्यार्थज्ञानानुमानेन संसर्गसिद्धौ शब्दस्यानुवादकत्वं तथा च गृहीतग्राहित्वेन लौकिकशब्दस्याप्रमाणत्वं। वेदे तु वक्तुरभावादेव तादृशानुमानाभावेन स्वातन्त्र्येण प्रमाणत्वमित्याहुस्तन्न। आकाङ्क्षादिघटितायाः सामग्र्या वेदे क्लृप्ताया लोकेऽपि सत्त्वेन लोके प्रथमं शाब्दबोधोत्पत्तेर्दुर्वारत्वात्। ननु लोके भ्रमजनकत्वशङ्काया विरोधित्वेन तन्निवृत्त्यर्थं प्रकृतवाक्यार्थगोचरयथार्थज्ञानशालित्वरूपाप्तोक्तत्वनिश्चयोऽपेक्षितस्तथा च लौकिकशब्दस्यानुवादकत्वं वेदे तु नित्यनिर्दोषत्वेनैव भ्रजनकत्वशङ्का नेति चेन्न। चक्षुरादाविव भ्रमजनकं न वेति शङ्कायां विद्यमानायामपि फलजनकत्वमिवात्रापि तच्छङ्कायाः प्रतिबन्धकत्वाभावात्। न चानाप्तोक्तत्वशङ्कायाः प्रतिबन्धकत्वेन तन्निवृत्त्यर्थमाप्तोक्तत्वनिश्चयोऽपेक्षितः। वेदे तु नित्यनिर्दोषत्वेनैव सा नेति वाच्यम् अनाप्तोक्तत्वशङ्काया आप्तोक्तत्वशङ्कापर्यवसिताया ग्राह्याभावशङ्कारूपायाः प्रतिबन्धकत्वाभावात्। न च शाब्दबोधहेतुतयाप्तोक्तत्वनिश्चयोऽपेक्षितः। वेदजन्यशाब्दबोधे व्यभिचारेण कारणत्वाभावात्। लौकिकशब्दजन्यशाब्दबोधे आप्तोक्तत्वनिश्चयस्यापेक्षितत्वमिति चेन्न। आप्तोक्तत्वनिश्चयं विनापि वेदानुकारेण पठ्यमानलौकिकमन्त्रादिवाक्ये वेदत्वभ्रमाज्जरन्मीमांसकस्य शाब्दबोधात्। आप्तत्वरूपहेतुगर्भवाक्यार्थस्य प्रथमं ज्ञातुमशक्यत्वेन हेतोरज्ञानाच्चेति। यदि च वैदिकशब्दज्ञानात् पूर्वमनाप्तोक्तत्वशङ्काव्युदासाय नित्यनिर्दोषत्वधीरपेक्षिता तर्ह्येते पदार्था मिथः संसर्गवन्तः दोषवत्पुरुषाप्रणीतत्वे सति सत्तात्पर्यकपदस्मारितत्वादित्यनुमानात्संसर्गज्ञानोत्पत्तेर्वेदस्याप्यनुवादकतापत्तेस्तदुक्तं कुसुमाञ्जलौ "व्यस्तपू-

न्दूषणाशङ्कैः स्मारितत्वादमिपदैरमी । अन्विता इतिनिर्णीते वेदस्यापि न तत्कृत'' इति । व्यस्ता निरस्ता पुन्दूषणस्याशङ्का यत्रेत्यर्थस्तेन दोषवत्पुरुषाप्रणीतत्वे सतीति पर्यवसितं पदैः सत्तात्पर्यकपदैः अन्विता मिथः संसर्गवन्तस्तथा चामीपदार्था मिथः संसर्गवन्तः । सत्तात्पर्यकपदस्मारितत्वादित्यनुमानंलब्ध तत् अनुवादकत्वं कुतो नेत्यर्थः ॥ प्राभाकरास्तु व्यभिचारिशब्दव्यावृत्तमव्यभिचार्यनुगतं प्रमाप्रयोजकं रूपमभ्युपेयं । यदभावादनाप्तोक्तवाक्यजप्रमा । तच्च ज्ञातमुपयुज्यते ज्ञायमानकरणनिष्टत्वे सति ज्ञानोपयोगि व्यभिचारवैलक्षण्यात् प्रमाहेतुत्वाद्वा । व्याप्तिमच्छब्द शक्तिमच्च । अथ यत्र यथार्थतात्पर्यकत्वं लिङ्गतयानुमितिजनकं तत्र तस्य ज्ञातोपयोगित्वस्य सत्त्वात्सिद्धसाधनमिति चेन्न स्वविषयकव्याप्ति ज्ञानाजन्यज्ञानं प्रति ज्ञानोपयोगित्वस्य साध्यत्वात् । न चानुमितेर्व्याप्तिविषयकज्ञानजन्यत्वाद्दृष्टान्तासिद्धिरिति वाच्यम् । स्वघटितस्वविषयकज्ञानाजन्यज्ञानं प्रति ज्ञानोपयोगित्वस्य साध्यत्वात्स्वस्य स्वाघटितत्वेन व्याप्तेर्व्याप्त्यघटितत्वेन न दृष्टान्तासिद्धिरिति । ज्ञातोपयोगिनं व्यभिचारवैलक्षण्यमात्र तु भूयोवयवेन्द्रियसन्निकर्षे गतमतो ज्ञायमानकरणनिष्ठेति धूमनिष्टरूपादौ व्यभिचारवारणाय ज्ञातोपयोगीत्युक्तम् । तथा च ज्ञायमानत्वावच्छिन्नकारणताकज्ञानोपयोगीत्यर्थः तच्चात्ममनोयोगेगतमतो व्यभिचारवैलक्षण्येति तच्चाप्रमाप्रयोजकभिन्नत्वार्थकं अनुभवमात्रस्यैव तन्मते प्रमात्वादप्रमा स्मृतिरेव । न च स्मृतिं प्रत्यपि यथार्थतात्पर्यकत्वस्योद्बोधकविधया हेतुत्वादसिद्धिरिति वाच्यम् । ज्ञायमानत्वप्रयुक्तकरणताकप्रमितिभिन्नप्रमितिजनकतानवच्छेदक सत्प्रमिति जनकतावच्छेदक यत्तद्रूत्वस्य विवक्षितत्वात् । तथा च यथार्थतात्पर्यकत्वस्य तादृशप्रमितिभिन्नप्रमितिजनकतानवच्छेदकत्वान्न दोषः । न च तथापि परामर्षे पक्षतायां तत्तन्मनोयोगादौ तत्तच्छाब्दप्रागभावादौ च व्यभिचार इति वाच्यम् । भावत्वेन विशेषणात्प्रागभावादेर्वारणम् । पक्षतायास्तन्मतेऽहेतुत्वात् । प्रागभावस्यास्वीकाराच्च दोषः । परामर्षेऽपि ज्ञातो-

पयोगित्वं स्वप्रकाशत्वेनेति न दोषः । यद्वा । अनेकप्रमितिजनकतावच्छेदकत्व विशेषणीयम् । तेन तत्तन्मनोयोगतत्तच्छब्दप्रागभावयोर्वारणम् ज्ञानाजन्यत्वेन विशेषणात्पक्षतापरामर्शयोर्वारणं पक्षतायाः संशयरूपत्वादिति । तच्च तात्पर्यं वेदे न्यायगम्य । न्यायश्चानादिमीमांसापरिशोधितस्तर्कः । तथा हि कपिञ्जलानालभेतेत्यादौ परार्द्धपर्यन्तानां कपिञ्जलानामालम्भने प्राप्तिः सर्वापदानासामर्थ्यात्परार्धं व्यावृत्तिरावश्यकीति बहुत्वमवश्यं सङ्कोच्यं एकत्वपरत्वे बहुत्वासङ्गतिरिति त्रित्वपरत्व न तु चतुरादिपरत्वं गौरवात् । चतुरादिपरत्वे त्रित्वस्यावश्यकत्वात् । त्रित्वपरत्वे चतुरादिपरत्वानावश्यकत्वात् । चतुरादिपरत्वे न हिंस्यात्सर्वा भूतानिति वेदस्य प्रतिरोधकत्वाच्च । न च त्रित्वपरत्वे कुतो न प्रतिबन्ध इति वाच्यम् । कपिञ्जलानित्यादिवेदानुरोधेन त्रित्व प्रतिरोधाभावादिति न्यायाभासादत्र तात्पर्यधीस्तत्रासंसर्गाग्रहमात्र न्यायसिद्धतात्पर्यबुद्धेरभावात् । लोके च पुंसां न्यायाविषयेपि तात्पर्यस्य सत्त्वात् । न न्यायगम्यं तात्पर्यं किन्त्वनुमानादिगम्य । तथा हि इदं वाक्य भ्रमप्रमादिविशिष्टज्ञानयोरन्यतरजन्यं सतात्पर्यकवाक्यत्वादित्यनेनान्यतरजन्यत्वानुमितौ सत्यां ततोऽयं न भ्रमवान् प्रमादवान्वा तदभाववति व्यावर्तकधर्मज्ञानवत्त्वात् । प्रमादश्च घटादिपदे पटादिशक्तिभ्रम एव । न प्रतारकः साधुत्वात् । साधुत्वं तु प्रतीतार्थस्य विपरीतप्रतीतावनिष्टसाधनताज्ञानवत्त्व प्रतारणा च प्रतीतार्थस्य विपरीतप्रतिपिपादयिषा अथ नापटुकरणदोषशून्यत्वात् । अपटुकरणत्व चान्यवर्णस्थाने वर्णान्तरानुकूलयत्नवत्त्व इत्थं च भ्रमाद्यभावेऽनुमिते इदं वाक्यं यथार्थवाक्यार्थज्ञानजन्य सतात्पर्यकभ्रमाद्यजन्यवाक्यत्वात् । मद्वाक्यवत् । यत्तद्गर्भव्याप्त्या विशिष्य यथार्थज्ञानजन्यत्वं सिद्ध्यति । तथा च लोके यथार्थतात्पर्यग्राहकत्वादिज्ञाने उक्तरीत्या विशिष्य यथार्थवाक्यार्थज्ञानजन्यत्वे ज्ञाते इदं वाक्यं यथार्थतात्पर्यकं यथार्थवाक्यार्थज्ञानजन्यत्वादित्यनुमानेन यथार्थतात्पर्यग्रह इति । यथार्थवाक्यार्थज्ञानजन्यत्वग्राहकेण वाक्यार्थस्य विषयीकरणाल्लौकिकश-

र्थोऽनुवादको न तु वैदिकः। वेदे न्यायात्सामान्यतस्तात्पर्यग्रहात्। लोके न वाक्यार्थस्य बाधितत्वसंशयान्न सामान्यतस्तात्पर्यग्रह इति वेदे तु वेदार्थत्वेनाबाधितत्वनिश्चय इत्याहुः। अत्रोच्यते। आप्तवाक्याद्यत्र प्रयार्थेतात्पर्यकमिति सामान्यतो निश्चयस्तत्र कथमनुवादकत्वं। एवं यजेतेत्यत्र यजिपदं लिङ्पदार्थान्वितस्वार्थपरमिति तात्पर्यग्रहे को वा भेद इति लोकवेदयोस्तौल्यमेव। ननूक्तमेव लोके बाधितत्वशङ्कया न तात्पर्यग्रहः। वेदे तु वेदार्थत्वेनाबाधितत्वाच्छङ्कैव नोदेति। तथा च लोके मन्वादिवत् तात्पर्यग्रहादनुवादकत्वमिति चेन्न। लोके मन्वादिपुरुषीयतात्पर्यविषयत्वेनाबाधितत्वनिश्चयात्। वेदो नियमेनैव प्रमाणमिति येन न ज्ञायते तस्य वेदेपि बाधितत्वसंशयसम्भवाच्च। किं च। प्रमाद्यभावादिकं निश्चेतुमशक्यत्वात्संशयेऽपि लोकवेदयोः शाब्दबोधोपपत्तेर्न यथातात्पर्यनिश्चयः कारणमिति। किं च यागो नेष्टसाधनमिति ज्ञानसत्त्वेपि यजिपदं लिङ्पदार्थान्वितस्वार्थपरमिति सामान्यतो निश्चयाच्छाब्दबोधः स्यादिति दिक्॥

**नैयायिकास्तु पृथगेव शब्दो मानं न त्वनुमानं शब्दस्यार्थाव्याप्यत्वात् न हि यत्र शब्दस्तत्र घटानयनादिरूपोऽर्थः शब्दस्याकाशवृत्तित्वाद्घटादेश्च तदवृत्तित्वात्। दृश्यते च व्याप्तिज्ञानविधुराणामपि शब्दादन्वयानुभवः**

स्वमतमाह। नैयायिकास्त्वित्यनेन। परमतं दूषयति। न त्विति ननु लाघवादनुमानविधयैव शब्दस्य प्रामाण्यमस्तु किमतिरिक्तप्रमाणान्तरकल्पनयेत्यत आह। न त्विति। अनुमानविधया निरुक्तपदपक्षकपदार्थपक्षकानुमानविधया। अथ वार्थसाध्यकशब्दहेतुकानुमानविधया। तादृशानुमानं त्वानयनादिकं कर्मतासंसर्गेण घटादिमत्। आकाङ्क्षादिम-

त्पदकदम्बात् । पटानयनादिवदेवं बोध्यम् । हेतोर्वैयधिकरण्यप्रयुक्तमव्याप्य-त्वमाह । शब्दस्येति । व्याप्त्यभावं दर्शयति न हीत्यादिना । अत्र व्याप्तौ हेत्वधिकरणे हेतुतावच्छेदकसम्बन्धेन साध्याधिकरणं साध्यतावच्छेदक-सम्बन्धेन बोध्यं प्रकृते हेतुतावच्छेदकसम्बन्धः समवायस्तेन स्वप्रतिपा-द्यतादिसम्बन्धेन शब्दस्यानयनादिवृत्तित्वेऽपि नक्षतिः । तदवृत्तित्वात् । साध्यतावच्छेदककर्मतादिसम्बन्धेन गगनाद्यवृत्तित्वात् । तेन येन केनचि-त्परम्परा सम्बन्धेन घटादेर्गगनवृत्तित्वेऽपि न क्षतिः । ननु स्वप्रतिपाद्य-तासंसर्ग एव हेतुतावच्छेदकसम्बन्धोऽस्तु तथा च तेन सम्बन्धेन शब्दस्यानयनादिवृत्तित्वात् शब्दस्याव्याप्यत्वाभावादित्यत आह । दृश्यते चेति । यद्वा ननु न वयं तादृगशब्दार्थयोर्व्याप्यव्यापकभावं ब्रूमः किं तु तादृशशब्दस्मारितत्वार्थसंसर्गयोस्तथा चैते पदार्थास्तात्पर्यविषय-मिथः संसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेन कर्म-त्व द्वौ घटादिसंसर्गसिद्धिरित्यत आह । दृश्यते चेति । व्याप्तिज्ञानवि-धुराणां व्याप्तिज्ञानशून्यानां । तथा च शब्दश्रवणोत्तरं झटितिनियमेन व्याप्तिज्ञाने मानाभावादिति भावः ॥

**न चायमनुमितिरूपस्तस्या व्याप्तिधीजन्यत्वात् प्रतीयन्ति च लौकिकाः अननुमितमसाक्षात्कृतं च श्रुतमिदं नैयायिकेभ्य इत्यलमतिविस्तरेण ।**

भ्रान्तः शङ्कते न चायमिति । अयं अनुभवः तस्याः अनुमितेः । ननु शब्दस्य पृथक्प्रामाण्यकल्पनापेक्षया लाघवात्सर्वत्र शब्दश्रवणोत्तरं व्याप्तिज्ञानं जायत एवेति कल्पनीयमत आह प्रतीयन्ति चेति । यद्वा न चानुभवानुसारिणी व्यवस्था अन्यथा साक्षात्करोमीत्यनुभवाद्विलक्षणानु मिनोमीति प्रतीत्यानुमितिरपि न सिध्येतेति । शाब्दबोधेऽपि विलक्षणानु-भवं दर्शयति । प्रतीयन्ति चेति । प्रतियन्तीदृशप्रत्ययेन निश्चिन्वन्ति । लौकिकाः लोके भवाः । शाब्दबोधस्यानुमित्यात्मकत्वे प्रतिपादिते तद्वि-

दसिद्धावुत्कटेच्छावत्त्वात्प्रागननुमितमित्युक्तम् । साक्षात्कारभिन्नत्वस्य परेण प्रतिपादनात्तद्भिन्नदसिद्धावुत्कटेच्छाया अभावात् । अत एव नोपमितमिति स्वयं नोक्तम् । तथा चासाक्षात्कृतमिति प्रसङ्गादुक्तं । नैयायिकभिन्नानां शास्त्रज्ञानां तत्र विद्वत्वाद्वैयायिकेभ्य इत्युक्तम् । एवं च क्रियावैलक्षण्याधीनतया विलक्षणं कारणमवश्यं वाच्यं स एव शब्द इति भावः । अत्र नैयायिकपदमाप्तस्याप्युपलक्षणमित्याप्तात् श्रुतमित्यर्थः । शाब्दयामि शृणोमीति विलक्षणप्रतीतिसिद्धायाः शाब्दत्वजातेस्तदवच्छिन्नम्प्रत्याकाङ्क्षादिज्ञानस्य हेतुत्वकल्पनावश्यकत्वे पुनर्व्याप्तिज्ञानस्य हेतुत्वकल्पनं तत्रानुमितित्वजातिकल्पने गौरवमिति बोध्यम् । विस्तरस्तु शाब्दबोधस्यानुमित्यात्मकत्वे वह्निव्याप्याभाववान्पर्वतो वह्निमानिति शाब्दबोधो न स्यात् । अनुमितौ वह्निव्याप्यवत्ताज्ञानस्य हेतुत्वात् । तादृशशाब्दबोधे वह्निव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वाचानुमितिरूपो बोध्यः ।

**ननु यदि स्वातन्त्र्येणैव शब्दो मानं तदा घटमानयेत्यतः पामराणामप्यर्थप्रत्ययः स्यादिति चेन्न । शक्तिग्रहस्यापि सहकारित्वात् पामराणां च घटादिशब्दशक्तेरग्रहात् । अथ केयं शक्तिः अभिधानामपदार्थान्तरं सङ्केतग्राह्यमिति मीमांसकाः । नैयायिकास्त्वावश्यकत्वात्सङ्केत एवाभिधा न पदार्थान्तरं मानाभावात् ।**

ननु घटमानयेत्यादि वाक्यात् पामराणामपि शाब्दबोधः स्यादिति बाधकसत्त्वात्कथं शब्दस्य स्वातंत्र्येण प्रमाणत्वमित्याह नन्वित्यनेन । ननु चैतावता प्रबन्धेन शाब्दबोधकरणत्वं शब्दे सिद्धं । तच्च न स्वरूपतः तस्याशुतरविनाशित्वात् । नापि ज्ञायमानस्य मौनिश्लोकादौ व्यभिचारात् । तत्र पदाभावेऽपि शाब्दबोधोदयात् । किं तु पदज्ञानं करणं

तच्च पदार्थोपस्थितजननद्वारा इतरथा पदज्ञानेऽसति प्रकारान्तरेण पदार्थोपस्थितौ शाब्दबोधापत्तेः । तज्जनकत्वं च पदज्ञानस्यैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वेनापरसम्बन्धिस्मृतिजनकत्वम् । पदस्य सम्बन्धित्वज्ञानाधीनं तत्सम्बन्धित्वज्ञानं न येन केनचित्सम्बन्धेन अन्यथा समवायेन वस्तुपदोपस्थ पितस्य गगनस्य शाब्दबोधापत्तिः । किं तु वृत्त्या वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धस्तथा च शक्तिलक्षणान्यतरसम्बन्धेन पदार्थोपस्थितिद्वारा शाब्दबोधजनकत्वं पदज्ञाने सिद्धम् । तत्र शक्तिं प्रतिपादयितुं भूमिकामारचयति नन्वित्यादिना ॥ इयं शाब्दबोधसहकारीभूतशक्तिग्रहविषयिणी पदनिरूपितार्थनिष्ठा । ननु शक्तिस्तव मते ऽस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा तादृशज्ञानं तादृशकृतिर्वेति विनिगमनाविरहेण तादृशज्ञानेच्छाकृतीनां त्रयाणां कारणतेति लाघवात्पदार्थान्तरं स्वीकृत्य ज्ञानस्य कारणत्वकल्पने एक एव कार्यकारणभाव इति मीमांसकमतमाह अभिधेति । सङ्केतग्राह्यं अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतग्राह्यं आवश्यकत्वात् तवाभिमतशक्तिग्राहकत्वेन सङ्केतस्यावश्यकत्वात् । नन्वभिहितमेव विनिगमनाविरहात्सङ्केतरूपा न शक्तिरिति पदार्थान्तरं कल्पनीयमत आह । मानाभावादिति । तवापि शक्तिग्राहकसङ्केतस्यापि ज्ञानादिना विनिगमनाविरहः अतिरिक्तपदार्थकल्पनं चेति महद्गौरवमिति भावः ॥ किं च तवमते ईश्वरानङ्गीकारेण चैत्रादेस्तादृशीच्छा वाच्या । तथा च चैत्रेच्छा मैत्रेच्छा वा तज्ज्ञानं कृतिर्वेति विनिगमनविरहेण चैत्रादेरनन्तत्वेन चानन्तकार्यकारणभावापत्तेः ।

स च सङ्केतोऽस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिकेच्छा । हन्तैवं पामरादिसङ्केतिता अपि शब्दा अभिधायिका स्युरिति चेन्न । नहि सङ्केतमात्रमभिधा किन्त्वीश्वरसङ्केतः न चापभाषिते सोऽस्ति मानाभावात् कथन्तर्हि ततोऽन्वयबोध इति चेत्

शक्तिभ्रमादिति गृहाण। कथन्तर्हि पामरादीनामीश्वरम निच्छतां मीमांसकादीनां चार्थप्रत्ययः शब्दादिति चेदुच्यते न तावदीश्वरसङ्केतत्वेन तद्ग्रहः कारणं किन्तु सङ्केतत्वेन अस्ति च तेषामपि तथा ज्ञानं आधुनिकसङ्केतितानां चैत्रादिशब्दानां का गतिरिति चेत् द्वादशे ऽहनि पिता नाम कुर्यादिति सामान्यतस्तस्यापीश्वरसङ्केतितत्वादिति गृहाण।

अस्मादिति ॥ न च विनिगमनाविरहेण शक्तेरस्माच्छब्दादयमर्थो ... इत्याकारकज्ञानेच्छाकृतीनां शाब्दबोधहेतुत्वप्रसङ्ग इति वाच्यम् ईश्वरज्ञानकृत्योर्निखिलविषयकत्वस्वीकारेऽपि निखिलघटत्वादिप्रकारिता... ... घटत्वादिप्रकारिकायाः शक्तित्वे एकत्र पक्षपाति ... विनिगमनायाः सत्त्वात्। न च ज्ञानेच्छाकृतीनां समान-प्रकारकत्वनियमेन ज्ञानकृत्योस्तादृशप्रकारिताऽवश्यं वाच्येति वाच्यम्। ... तादृशनियमस्वीकारात्। तत्र हि यत्प्रकारकं ज्ञानं तत्प्रकारि-केच्छा जायते एवं तत्प्रकारिकैव कृतिरिति। नित्येच्छा तु न ज्ञानजन्य-त्वेन सिद्धा अपि तु धर्मिग्राहकप्रमाणेनेति। न चेच्छायामेव प्रकारिताख्य-विषयितायां किं मानमिति वाच्यम्। वेदजन्यशब्दबोधे तात्पर्यज्ञानस्य हेतुत्वं निखिललोकसिद्धं तत्र तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वं। प्रकृते-ऽग्निष्टोमपदात् ज्योतिष्टोमरूपोऽर्थो बोद्धव्य इति विश्वनाथेच्छारूपा ... नेच्छा विशिष्यज्योतिष्टोमादिप्रकारकैवेति। एवं ईदृशेच्छयाः सङ्केतत्वे ईश्वरसन्तः। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा रूपसङ्केतः ... प्रमापिते पामराद्यभिहिते। स ईश्वरसङ्केतः तर्हि अपभाषिते ईश्वरासङ्केतसत्त्वे। ततः अपभाषितशब्दात्। शक्तिभ्रमादिति। गागरी-... घटादिशक्तिभ्रमादिति भावः। ननु भवतु पामरादिसङ्केतित-... ईश्वरस्वीकर्तॄणां विदुषां शक्तिभ्रमः परन्तु पामराणामीश्वरमवि-

दुषां कथं शक्तिभ्रम इत्याह ।कथमिति । तर्हि ईश्वरसङ्केतस्य शक्तित्व पामराणामिति । पामरैर्मीमांसकैश्च कथमीदृशः सङ्केतो ज्ञातव्य इति भावः । तद्ग्रहः सङ्केतग्रहः किन्त्विति तथा च वस्तुगत्या ईश्वरसङ्केत उपेक्षित इति भावः । तेषां प मराणां मीमांसकानां चापामरैस्तादृशसङ्केतत्वेन ज्ञातुं शक्यत एव परन्तु वक्तुं न शक्यते । यथा स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपा व्याप्तिर्गृह्यत एव परन्तु वक्तुं न शक्यते कथमन्यथा तेषामनुमितिः चन्द्रशेखरविद्वेषिणां तु सङ्केतत्वेन ज्ञानं कारणमिति भावः । तेषां पामराणां मीमांसकानां संकेतत्वेन ज्ञानं । सामान्यतः पिता पुत्रस्य नाम-कुर्यादिति सामान्यतः । अत्र जगदभिवन्द्य श्रीरामकृष्णभट्टाचार्यचक्रवर्त्तिनः । पितानाम कुर्यादित्यत्र पितृपदेन निखिलाः पितर उपस्थाप्यन्ते । चैत्रमैत्रादिपदसमभिव्याहाराच्चैत्रमैत्रादिपितर एव बोध्यन्ते । अन्यथा पितृभ्यो दद्यादित्यत्र चैत्रपितृसंप्रदानकदानाप्रतीतेश्चैत्रादेः श्राद्धादौ प्रवृत्तिर्न स्यात् तथा च चैत्रपित्रे चैत्रो दद्यान्मैत्रपित्रे मैत्रो दद्यादिति बोधः । प्रकृते पिता चैत्रपिता चैत्र इति नाम कुर्यात् मैत्रपिता मैत्र इति नाम कुर्यात् इत्यादिविशिष्येच्छा वच्या तथा चाधुनिकचैत्रादिशब्दा अपि विश्वनाथसङ्केतिता भवन्त्येवेत्याहुः ।

स्यादेतत् । सोयं सङ्केतः कथं ग्राह्यः । उपमानादिति चेन्न । तस्य वाक्यार्थज्ञानमूलकत्वात् तस्य च शक्तिग्रहमूलकत्वादुच्यते । प्रथमतः शक्ति ग्रहो व्यवहारात्तथा हि घटमानयेति केनचिदुक्तः कश्चन तदर्थं प्रतीत्य घटमानयति तच्चोपलभमानो बालस्तया क्रियया तस्य प्रयत्नमनुमिनोति तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानमनुमिनोति स्वप्रयत्ने तेन तथा निश्चयात् । ततस्तद्धेतुत्वाकाङ्क्षायामुपस्थित-

तस्माच्छब्दमेव कल्पयति तदनन्तरं घटादिपदानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटधीजनकमिति कल्पयति कुत्र च तस्मिन्नतिप्रसङ्गभङ्गाय तज्जननानुकूलं सङ्केतरूपं सम्बन्धं कल्पयतीति किमनुपपन्नं तदनन्तरं क्वचिद्व्यवहारात्क्वचिदुपमानात्क्वचिच्छब्दात्क्वचिद्व्याकरणकोषादिति सङ्क्षेपः ।

कथं ग्राह्यः प्रथमतः कस्माद्ग्राह्य इत्यर्थः । अन्यथोपमानादित्यत्र प्रकारान्तरेणाप्तवाक्यादिनाऽतिदेशवाक्यार्थज्ञानमूलशक्तिग्रहसम्भवादनवस्थादिरूपदूषणासङ्गतेः । तस्य उपमानस्य वाक्यार्थज्ञानमूलकत्वात् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थज्ञानकारणकत्वात् तस्य वाक्यार्थज्ञानस्य शक्तिग्रहमूलकत्वादिति । गवयपदादीनां शक्तिग्रहे ह्यतिदेशवाक्यार्थज्ञानं कारणं तत्र वाक्यस्य पदघटितत्वेन तेषु पदेषु शक्तिग्रहोऽपेक्षितः तच्छक्तिग्रहोऽप्युपमानादेव वाच्यस्तत्राप्यतिदेशवाक्यार्थज्ञानं कारणमित्यनवस्थेत्यर्थः । केनचित् प्रयोजकवृद्धेन । कश्चन प्रयोज्यवृद्धः । तदर्थं घटानयनादिरूपमर्थं । तच्च घटानयनं च तस्य प्रयोज्यवृद्धस्य । अनुमिनोति । अयं घटानयनविषयकप्रयत्नवान् घटानयनक्रियावत्त्वात् इति । तेन बालेन । तथा निश्चयात् ज्ञानजन्यत्वनिश्चयात् ततः प्रयोज्यवृद्धज्ञानानुमानानन्तरं । तद्धेतुत्वाकाङ्क्षायां घटानयनज्ञाने हेतुत्वाकाङ्क्षायां शब्दमेव कल्पयति शब्दमेव तद्धेतुत्वेन कल्पयति । तदनन्तरं शब्दस्य सामान्यतो हेतुत्वकल्पनानन्तरं । प्रत्येकं विशिष्य । आवापोद्वापाभ्यामिति घटमानयेत्युक्ते घटमानयति ततो घटं नय पटमानयेत्युक्ते घटं नयति पटमानयतीत्यानयननयनरूपाभ्यामावापोद्वापाभ्यां प्रत्येकं घटपदं घटज्ञानजनक आनयनपदमानयनज्ञानजनकमिति कल्पयतीत्यर्थः । तस्मिन् शब्दस्य ज्ञानजनकत्वे अतिप्रसङ्गभङ्गाय घटपदादाकाशबोधः स्यादित्यतिप्रसङ्गभङ्गायेत्यर्थः तदनन्तरं व्यवहारात्प्रथमतः शक्तिग्रहान्

न्तरं । व्यवहारात् । प्रयोज्यप्रयोजकवृद्धस्थले व्यवहारात् । उपमानात् गवयपदस्थले गवयो गवयपदवाच्य इत्युपमित्यात्मकशक्तिग्रह उपमानात् । शब्दाद्यथा कोकिलःपिकपदवाच्य इत्यादिवाक्यरूपशब्दात्पिकप । व्याकरणाद्यथा । भूधातोः सत्तात्वविशिष्टे शक्तिः । कोशाद्यथा अमरा निर्जरा देवा इत्यादावमरपदस्य देवत्वविशिष्टे शक्तिः आदिपदग्राह्यं वाक्यशेषादि वाक्यशेषाद्यथा यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्याकारकवाक्यशेषात्स्वर्गपदादिशक्तिग्रहः । अत्र दुःखासम्भिन्नत्वमेककालावच्छेदेनैकात्मवर्त्तित्वसम्बन्धेन दुःखाभावविशिष्टत्वं तच्चास्मदादेरपि कदाचिदस्तीत्यतो न च ग्रस्तमिति विच्छेदशून्यमित्यर्थः । कदाचिद्विच्छेदशून्यसुखधारास्मदादेरप्यस्तीत्यतोऽभिलाषोपनीतमिति शरीरावच्छेदेन फलोपहितेच्छागोचर इत्यर्थः । न च तस्यापि पातादिदुःखसम्भिन्नत्वादसम्भव इति वाच्यम् । तद्भिन्नदुःखासम्भिन्नत्वस्य विवक्षितत्वात् । न च तथापि चक्रवर्त्तिसुखे गतमिति वाच्यम् । एकजन्मावच्छेदेन दुःखासम्भिन्नत्वस्य विवक्षितत्वात् तथा च पातादिभीतिजन्यदुःखभिन्नदुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यसुखत्व स्वर्गत्वमिति पर्यवसितं । स्वर्गिशरीरमात्रवर्त्तिनी तादृशजातिः सैव शक्यतावच्छेदिका शक्यतावच्छेदकप्रकारेण शक्तेर्बोधजननादिति । यथा वा यवमयश्चरुर्भवतीत्यत्र यवपदस्य कङ्गौ म्लेच्छानां प्रयोगः। आर्याणां च दीर्घशूकविशेषे प्रयोगस्तत्र यत्रान्या उपधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति वाक्यशेषात् । यथा वा वसन्ते सर्वसस्यानां जायते पत्रशातनं मोदमानश्च तिष्ठन्ति यवाः कणिश शालिन इति । वाक्यशेषान्निर्णीयते । शक्तिभ्रमात्कङ्गौ प्रयोगः । विवरणाद्यथा पचति पाकं करोति इतियत्नार्थककरोतिना सर्वाख्यातविवरणादाख्यतस्य यत्ने शक्तिर्गृह्यते । प्रसिद्धपदसान्निध्याद्यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ सहकारादिप्रसिद्धपदसान्निध्यादेव तादृशव्यक्तिविशेषे पिकपदवाच्य इति शक्तिग्रहः सङ्ग्रहश्च "शक्तिग्रहं व्याकरणोपमानकोशाप्तवा-

स्यात् …… वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपद-
…… इति ।

स्यादेतत् द्वयोर्व्यवहारं पश्यता सङ्केतो ग्राह्यस्तयो-
…… कथं संकेतग्रहः अन्ययोर्व्यवहारादिति चेन्न अनव-
स्थापत्तेः अनादित्वादियमिष्टैवेति चेन्न सर्गादौ तद-
……भवात् सर्गादिरेवासिद्ध इति चेन्न कार्यद्रव्यानधि-
करणकार्याधिकरणकालस्य खण्डप्रलयतया प्रलयस्यागम-
सिद्धत्वादुच्यते ।

अनवस्थेति । अन्ययोः सङ्केतग्रहः । इतरयोर्व्यवहारादित्येवमन
…… । अनादिसिद्धानवस्था न दोषावहेत्याह अनादित्वादिति ।
…… तदभावात् प्रयोज्यवृद्धप्रयोजकवृद्धयोरभावात् । कार्यद्रव्येति
महाप्रलयेऽतिव्याप्तिवारणाय । कार्याधिकरणेति । तच्च भावकार्याधिकर
णपरं तेन महाप्रलये ध्वंसादेर्वृत्तित्वेपि न क्षतिः । तथा च कालकपाला-
न्यावृत्तिघटप्रागभावः । कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिः । अभा-
वत्वादाकाशवृत्त्यभाववदिति वृत्तप्रलयसिद्धिः । तथा घटध्वंसं पक्षीकृत्या-
ग्निमप्रलयोऽपि साधनीयः । एककालीनाः सर्वे परमाणवः कार्यद्रव्याभा-
ववन्तः आरम्भकत्वात् । विनष्टद्व्यणुकारम्भकपरमाणुवदिति । जगत्सन्त-
तिरत्यन्तमुच्छिद्यते सन्ततित्वात्प्रदीपसन्ततिवदित्यनुमानात्प्रलयसिद्धिरि-
ति सूचितम् । नन्विदमप्रयोजकमत आह आगमेति आगमसिद्धत्वात् ।
धाता यथा पूर्वमकल्पयदित्यादिप्रलयबोधकागमसिद्धत्वात् ।

सर्गादौ भगवानीश्वरः शरीरद्वयं परिगृह्य तथा
व्यवहरति । ततस्तद्व्यवहाराद्बालः पूर्ववत्संकेतं गृह्णा-
तीति किमनुपपन्नम् । ईश्वर एव किं मानमिति चेत्
सर्गादावन्यथा व्यवहारानुपपत्तिरेव । ननु पूर्वस-

गैसिद्धसर्वज्ञत्वान्मन्वादय एव व्यवहारप्रवृत्तिहेतवः सन्त्विति चेन्न । तेषां सर्वज्ञत्वे मानाभावात् व्यवहारान्यथानुपपत्तिरेव मानमिति चेन्न पूर्वसर्गे व्यवहारस्यैवमनुपपत्तेः तत्राप्येकः कल्प्यतामिति चेन्न । प्रतिसर्गं भूयसां तथा कल्पनायां गौरवात् अस्त्वेक एव सर्वत्रमूलमिति चेत्स एवास्माकं भगवानीश्वर इति दिक् ।

तथा च सर्गादौ प्रयोज्यवृद्धप्रयोजकवृद्धयोरभावात् व्यवहाराभावेन शक्तिग्रहाभावे पर्यवसिते समाधत्ते सर्गादावित्यनेन तथा व्यवहरतीति प्रयोजकवृद्धप्रयोज्यवृद्धौ भूयेश्वरो घटमानयेति वाक्यं प्रयोज्य वृद्धं प्रति वदति स एव घटमानयति । अत्रागमत्वं किमिति प्रसङ्गाद्विचार्यते न तावन्महाजनानां वेदाकारानुगतव्यवहाराद्वेदत्वं जातिविशेषः । चैत्राद्यनुमापकशब्दवृत्तिजात्या साङ्कर्यात् । नापि मुख्यवेदप्रयोगविषयत्वं मुख्यार्थाज्ञानात् । नापि शाखासमुदायत्वं तस्य वेदनिरूप्यत्वात् । नापि स्वतन्त्रपुरुषप्रणीतत्वं । अस्मर्यमाणकर्त्तृकत्वेन तस्य स्वतन्त्रपुरुषप्रणीतत्वाभावात् । तथा च वेदः अपौरुषेयः अस्मर्यमाणकर्त्तृकत्वादाकाशवत् । अत्र वेदः पौरुषेयो वाक्यत्वात् भारतादिवदित्यनुमानाद्वेदस्य पौरुषेयत्वं सिद्धे वेदजनकेश्वरसिद्धिः । 'तस्मात्तपस्ते पुनश्चत्वारो वेदा अजायन्त ऋचः सामानि जज्ञिरे इत्यादि श्रुतेः" । "प्रतिमन्वन्तरे चैषा श्रुतिरन्याभिधीयत" इति स्मरणाच्च । न च स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारका इत्यनेन विरोध इति वाच्यम् तस्य श्रुतिविरोधेनान्यपरत्वात् वेदस्यास्मदाद्यननुभूतत्वेन स्वयम्भूत्वात् । अत्र वेदत्वं शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं । अस्यार्थः । शब्दस्तदुप-

जीवि च यत्प्रमाणं तदतिरिक्तं यत्प्रमाणं तज्जन्या या प्रमितिः। तद्विषयार्थक भिन्नत्वेसति शब्दजन्यं यद्वाक्यार्थज्ञानं तज्जन्यो न भवति यः स प्रमाणशब्द त्यर्थः। अत्र सत्यन्तं घटमानयेत्यादिवाक्येऽतिव्याप्तिवारणाय शब्दोपाजीव्यनुमानजन्यप्रमाविषयत्वाद्वेदार्थस्येति लक्षणमसम्भवि स्यात्तद्वारणाय तदुपजीवीति। शब्दवेदगोचरप्रमायाः शब्दतदुपजीविप्रमाणातिरिक्तमनोयोगादिजन्यत्वादसम्भव इति द्वितीयप्रमाणपदं। सर्वेषां प्रमाणानामदृष्टद्वारा परम्परया शब्दोपजीवनात्तदतिरिक्तप्रमाणाप्रसिध्याऽसम्भवः स्यादतः प्रथमं प्रमाणपदं शब्दोपजीविता यस्य प्रमाणस्य स्वप्रमाणताव्यवस्थितौ शब्दोपजीविप्रमाणशब्देन तादृशप्रमाणमुक्त चक्षुरादिप्रमाणं च न तथा वेदार्थस्य वेदाभिन्नस्वप्नरूपभ्रमविषयत्वात् तद्भर्म्यंशे प्रमाकरणमनोरूपप्रमाणजन्यज्ञानविषयत्वाद्वेदार्थस्य लक्षणेऽसम्भवः स्यादतः प्रमितीति प्रमितित्वं सर्वांशे विवक्षितं स्वप्ने तथात्वाभावात्। नन्विदमीश्वरसिद्धौ सम्भवति स एव नास्तीत्याह ईश्वर इति। क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यत्र क्षित्यादिकमकर्तृकं शरीराजन्यत्वादिति सत्प्रतिपक्षक्लेश प्रतिसन्धाय प्रकारान्तरेणेश्वरं साधयति सर्गादाविति। यद्वा सर्गादौ व्यवहारसाधक ईश्वर इत्युक्तं तत्रेश्वरे प्रमाणाभावे व्यवहारं कथमिति पर्यवसिते व्यवहारजनकत्वेनेश्वरसाधनमेवोचितमिति तज्जनकत्वेनेश्वरं साधयति। सर्गादाविति। पूर्वसर्गसिद्धेति। तथा च पूर्वसर्गे गृहीतसङ्केतानां मन्वादीनामस्मिन्सर्गे व्यवहारजनकत्वमिति भावः। प्रवृत्तिहेतवः अतिप्रयोज्यवृद्धस्यानयनादौ प्रवृत्तिहेतवः। मानं सर्वज्ञत्वे प्रमाणं। पूर्वसर्गेति। मन्वादीनां सर्वज्ञत्वे क्लृप्तेति यद्व्यवहारं दृष्ट्वा मन्वादीनां सङ्केतग्रहो जातस्तद्व्यवहारस्यानुपपत्तिरिति भावः। तथा कल्पनायां प्रवृत्तिहेतुत्वकल्पनायां सर्वत्र जगति। एवं विश्वस्य गोप्ता भुवनस्य कर्त्ता विश्वतश्चक्षुरुत विश्वतो मुखं विश्वतो बाहुरुत विश्वतः स्यात्। स बाहुभ्यां धमति सम्पतत्रैर्द्यावभूमी जनयन्देव एक इत्यादिश्रुतयोऽपीश्वरसाधिका इति। अथ प्रयोजनाभावात्कथमीश्वरस्य सर्गादौ

शरीरद्वयपरिग्रहः। न च परदुःखप्रहारेच्छारूपकरुणैव प्रयोजनमिति वाच्यम् वैषम्यानुपपत्तेः एवं च स्वर्गिणमेव सृजेन्न नारकिणमिति धर्माधर्मादेपरतन्त्रत्वाद्धर्माधर्मानुरूपं फलमिति वाच्यम्। मीमांसकमतप्रवेशात्। तथा च कर्मनिमित्तमेव वैलक्षण्यमस्तु कीटादिज्ञानवता किमीश्वरेणेति चेत् अत्रोच्यते। कार्यत्वावच्छिन्नं प्रति अन्वयव्यतिरेकाभ्यां ज्ञानादिनां हेतुत्वं तच्च सर्गादौ नास्मदादीनामिति तदाश्रयत्वेनेश्वरसिद्धिः। न चैवं ज्ञानादीनां हेतुत्वकल्पने कृतं कर्मणां हेतुत्वकल्पनेनेति वाच्यम् ईश्वरज्ञानादीनां नित्यत्वादेकदा सर्गप्रलयौ स्यातां तथा च तत्तच्छुभाशुभकर्मजन्यादृष्टादिसहिता एव ज्ञानादयस्तत्तत्कार्यजनका इति। इत्थं च सर्गासाधारणक्रमिकादृष्टादिकारणकलापकालिकेश्वरचिकीर्षयास्नादृशप्रलयासारणक्रमिकादृष्टादिसामग्रीकालीनतादृशजिहीर्षायाः सर्वदा विरहान्न दोषः। अत्रेदं प्रतिभाति। खण्डघटः अस्मदादिकृतिभिन्नकृतिजन्यः घटत्वादाद्यघटवदित्यनुमानादस्मदादिकृतिभिन्ना कृतिः सिद्धा सा च गुणत्वाद्‌द्रव्याश्रितेति तदाश्रयस्त्वीश्वर एव अनयैव च रीत्या ज्ञानेच्छाजन्यत्वं साध्यं। तथा च कार्यमात्रं प्रतीश्वरज्ञानादिकं कारणमिति ज्ञानादीनां सर्वविषयकत्वमिति। ननूपादानप्रत्यक्षविधयेश्वरज्ञानस्य हेतुत्वात्कार्योपादानमात्रस्य विषयत्वेपि तस्य नित्यगुणादिविषयकत्वे मानाभाव इति चेन्न। गुणाद्यविषयकज्ञानस्य शशशृङ्गायमाणत्वात् नित्यविषयकज्ञाने तद्गुणादिविषयकत्वस्वीकारात्। न चेश्वरज्ञाने विषयतानन्त्यमिति वाच्यम्। विषयतायां विषयभेदनियमास्वीकारात् विषयभेदं विनापि कारणभेदाद्विषयताभेदस्वीकारात्। यथा विषयभेदं विनापि परामर्षादिकारणभेदादनुमित्यादौ विषयिताभेद इति। तर्हि निर्विषयकत्वमेव कुतो नेति चेन्न। कार्यकारणभावानुरोधात्सविषयकत्वस्वीकारात्। तथा हीश्वरज्ञानमुपादानप्रत्यक्षविधाया हेतुरिति तत्तदुपादानविषयकत्वमेव वाच्यम्। तस्य सर्वज्ञत्वे "यः सर्वज्ञः सर्वविदिति श्रुतेरेव"भारः।

एवं च यत्प्रकारकं ज्ञानं तत्प्रकारिकैवेच्छा यत्प्रकारिकेच्छा तत्प्रकारिका कृतिरिति नियमादिच्छाकृत्योः सविषयकत्वमिति तत्र ज्ञानादित्रये ईश्वरत्र लाघवादेकत्वं नित्यत्वं च सिध्यति न तु नानात्वमनित्यत्वं च गौरवात्। न चास्मदादीनामेव तादृशज्ञानादिकमस्तु किमीश्वरस्वीकारेणेति वाच्यम्। अस्मज्ज्ञानस्य भ्रमात्मकत्वात्। सर्गादावस्मदादिज्ञानाद्यसम्भवाच्च। किं च चैत्रादिभेदेन विनिगमनाविरहादनेकात्मनि तादृशज्ञानादित्रयसम्बन्धकल्पने गौरवात्तेषामाश्रयत्वेनैक एव कल्प्यते स एवेश्वर इति। तस्य भगवतो जगदगोचरत्वाभावात्सर्वेषां प्रत्यक्षात्मकमेव ज्ञानमिति। अत एव यः सर्वज्ञः सर्वविदित्यादि श्रुतिसिद्धसार्वज्ञ्यमपि सङ्गच्छते। अत्र पीलुपाकवादिनो वैशेषिकाः पीलौ परमाणौ पाकस्तथा च तेजः संयोगवशाद्घटादीनां द्व्यणुकपर्यन्तानां विनाशः। ततपूर्वरूपविनाशपाकजरूपोत्पादौ ततः पुनर्द्व्यणुकादिक्रमेण घटान्तरोत्पत्तिपाकजरूपं परमाणावेव द्व्यणुकादौ तु रूपजरूपमेव। न चावयविन्येव पाकजरूपोत्पत्तिर्लाघवात्। तत्ववयवेषु द्व्यणुकपर्यन्तविनाशकल्पने गौरवादिति वाच्यम्। अवयविन्येव पुनस्तेजसोऽतिशयितवेगवशादुत्पत्तिकल्पने पुनस्तेष्ववयवेषु पाकोत्पत्त्यसम्भवाद् इति तत्र कृतित्वेन कार्यत्वेन कार्यकारणभावानुरोधात्पाकस्थले कस्यचित्कृतिर्वाच्या यस्य कृतिः स ईश्वर इतीश्वरसिद्धिरित्याहुः। तदपरे न क्षमन्ते तादृशभटितिवह्निवेगातिशयक्रमेण विनाशोत्पत्तिस्वीकारे गौरवात्। पाकपूर्वस्थितरेव एष इत्युपलब्धिर्न स्याच्च तस्मादवयविन्येव पाकजरूपविनाशाविति। अत्र जरद्वैशेषिकाः। अवयविनि मणिसंयोगकाले दाहवारणाय संयोगसम्बन्धेन मणेः प्रतिबन्धकत्वं। तदारम्भकावयवादिषु परमाणुपर्यन्तेषु दाहवारणाय संयुक्तसमवायित्वादिना प्रतिबन्धकत्वे मणौ दाहवारणाय तादात्म्येन मणेः प्रतिबन्धकत्वमित्यनेकप्रतिबध्यप्रतिबन्धकभाव इति भवतां महद्गौरवं अस्मन्मते तु परमाणावेव दाह इति नैते प्रतिबध्यप्रतिबन्धकभावा इत्याहुः अत्र नैयायिकाः। रूपत्वावच्छिन्नं प्रति समवायेन द्रव्यस्य प्रतिबन्धक-

त्वमिति न परमाणुपर्यन्तावयवेषु दाहः । अन्त्यावयविनि मणौ च दाहवारणाय संयोगेन मणेः प्रतिबन्धकत्वमित्यनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनाभावः मणिसंयोगस्य मणावपि सत्त्वादिति संक्षेपः । अथ कया रीत्या वैशेषिकमते परमाणौ पाक इति चेत्तथा हि अग्निसंयोगात्परमाणौ कर्म ततः परमाण्वन्तरेण विभागस्ततो द्व्यणुकारम्भकसंयोगनाशस्ततो द्व्यणुकनाशस्ततः श्यामादिरूपविनाशस्ततो रक्तरूपोत्पत्तिरिति । अथ द्व्यणुकविनाशमारभ्य कतिभिः क्षणैर्द्व्यणुकमुत्पद्य रूपादिमद्भवतीति चेत् । अत्राचार्याः परमाणावग्निसंयोगात्कर्म ततः परमाण्वन्तरेण विभागस्ततो द्व्यणुकारम्भकसंयोगनाशस्ततो द्व्यणुकविनाशः परमाण्वाकाशविभागरूपो विभागजविभागश्चेत्येकः कालस्ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः परमाण्वाकाशसंयोगनाशश्चेत्येकः कालः । ततस्तृतीयक्षणे परमाणौ रक्तरूपोत्पत्तिः परमाणूत्तरदेशसंयोग इत्येकः कालः न च परमाणौ श्यामादिरूपविनाशक्षणे रक्तरूपोत्पत्तिक्षणे वा द्व्यणुकारम्भानुगुणकर्मास्त्विति वाच्यम् । कर्मवति कर्मानुत्पत्तेर्निर्गुणे कर्मानुत्पत्तेश्च तथा च वह्निसंयोगात्परमाणौ यत्कर्म तद्विनाशे सति गुणान्तरोत्पन्ने च सति द्रव्यारम्भानुगुणक्रियेति । न च श्यामादिरूपनाशक्षणे रक्तरूपोत्पत्तिः कुतो नेति वाच्यम् । रूपान्तरे पूर्वनाशस्य कारणत्वादिति चतुर्थे वह्निनोदनजन्यपरमाणौ कर्मनाशः । पञ्चमेऽदृष्टवदात्मसंयोगाद्द्व्यणुकारम्भानुगुणं परमाणौ कर्म षष्ठे परमाणुपूर्वदेशविभागः । सप्तमे परमाणुपूर्वदेशसंयोगनाशः अष्टमे परमाणौ द्व्यणुकारम्भकसंयोगः नवमे द्व्यणुकोत्पत्तिः दशमे रक्तरूपोत्पत्तिरिति दशक्षणाः । इयं च द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजननाङ्गीकारे सति सम्भवति तदनङ्गीकारे तु नवक्षणाः । तथा हि अग्निसंयोगात्परमाणौ कर्म ततः परमाणुद्वयविभागः ततो द्व्यणुकारम्भकपरमाणुद्वयसंयोगनाशस्ततो द्व्यणुकनाशः ततो द्व्यणुकनाशद्वितीयक्षणे परमाणौ श्यामादिरूपनाशः । तृतीये रक्तरूपाद्युत्पत्तिः कर्मनाशश्च चतुर्थे द्रव्यारम्भानुगुणं कर्म पञ्चमे विभागः

षष्ठे पूर्वसंयोगनाशः। सप्तमे द्व्यणुकारम्भकसंयोगः। अष्टमे द्व्यणु
त्पत्तिः नवमे रक्तरूपोत्पत्तिरिति नवक्षणाः। अथ यदि द्व्यणुकनाश
शिष्टं कालमपेक्ष्य विभागजविभागस्तदैकादशक्षणाः। तथा हि वह्निसं
गात्परमाणौ कर्म ततः परमाणुद्वयविभागः। ततो द्व्यणुकारम्भकपरमा
द्वयसंयोगनाशः ततो द्व्यणुकनाशः द्व्यणुकनाशद्वितीयक्षणे परमाण्वाः
शविभागः। अयमेव च द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजवि
गः। तृतीये क्षणे परमाण्वाकाशसंयोगनाशः। चतुर्थे क्षणे परमाणूत्त
देशसंयोगः। पञ्चमक्षणे परमाणुकर्मनाशः। षष्ठे क्षणे ऽदृष्टवदात्मसं
गाद्द्रव्यारम्भानुगुणक्रिया सप्तमे क्षणे विभागः। अष्टमे क्षणे पूर्वसंयो
नाशः। नवमे क्षणे द्व्यणुकारम्भकसंयोगः। दशमे क्षणे द्व्यणुकोत्पत्ति
एकादशक्षणे रक्तरूपोत्पत्तिरित्येकादशक्षणाः। अत्र दशक्षणायामेकाद
क्षणायां च द्व्यणुकनाशोत्तरमग्निसंयोगात्परमाणौ श्यामादिरूपनिवृत्ति
स्तदुत्तरक्षणे रक्तरूपोत्पत्तिः। पाकजरूपनिवृत्तौ समवायसम्बन्धेन द्व्य
णुकस्य प्रतिबन्धकत्वेन सति द्व्यणुके रूपनिवृत्त्यसम्भवात्। एकस्मादग्नि
संयोगात्परम्परया परमाण्वादिक्रियाक्रमेण द्व्यणुकनाशः। इतराग्निसंयो
गाच्च श्यामादिरूपविनाशः अन्यस्माच्च रक्तरूपोत्पत्तिरिति। अथैकस्मा
दाग्निसंयोगाद्विनाशोत्पादौ स्यातामिति चेन्न। अग्निसंयोगस्य तावत्का
लस्थिरत्वादुत्पादकस्य नाशकत्वे रूपनाशोत्तरमग्निनाशादग्निसंयोगना
परमाणौ बहुकालं नीरूपत्वापत्तेः। नाशकस्योत्पादकत्वे रूपोत्पादकाग्नि
संयोगनाशे रक्ततरत्वं न स्यादिति। अथ परमाण्वन्तरकर्मचिन्तनात्पञ्च
क्षणाः तथा हि एकस्मिन्परमाणौ कर्म ततः परमाणुद्वयविभागः ततो द्व्य
णुकारम्भकसंयोगनाशपरमाण्वन्तरकर्मणी इत्येकः कालः। ततो द्व्यणुक
नाशपरमाण्वन्तरकर्मजश्च विभाग इत्येकः कालः ततो द्व्यणुकनाशद्विती
क्षणे श्यामादिरूपनाशः। विभागात्पूर्वसंयोगनाशश्चेत्येकः कालः। ततद्वि
तीयक्षणे द्व्यणुकारम्भकसंयोगः उत्तरदेशसंयोग इत्येकः कालः। चतुर्थ
क्षणे द्व्यणुकोत्पत्तिः पञ्चमक्षणे रक्तोत्पत्तिरिति पञ्चक्षणाः। अथ द्व्य
नाशसमकालं परमाण्वन्तरे यदि कर्म तदा षट्क्षणाः तथा हि परमाण

कर्मणा परमाण्वन्तरविभागः। ततो द्व्यणुकारम्भकसंयोगनाशः। ततो द्व्यणुकनाशपरमाण्वन्तरे कर्म चेत्येकः कालः ततो द्व्यणुकनाशद्वितीयक्षणे श्यामारूपनाशः परमाण्वन्तरकर्मजश्च विभागः तृतीयक्षणे परमाणौ रक्तरूपोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च चतुर्थे क्षणे परमाण्वन्तरे द्व्यणुकारम्भकसंयोगः। पञ्चमे क्षणे द्व्यणुकोत्पत्तिः षष्ठे क्षणे रक्तरूपोत्पत्तिरिति षट्क्षणाः। अथ यदि श्यामरूपनाशक्षणे परमाण्वन्तरे कर्म तदा सप्तक्षणाः तथा हि परमाणौ क्रिया ततः परमाण्वन्तरे विभागः। ततो द्व्यणुकारम्भसंयोगनाशः ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः परमाण्वन्तरे कर्म चेति तृतीये क्षणे परमाणौ रक्तरूपोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च चतुर्थे क्षणे परमाण्वन्तरपूर्वसंयोगनाशः पञ्चमे क्षणे द्व्यणुकारम्भकसंयोगः। षष्ठे क्षणे द्व्यणुकोत्पत्तिः सप्तमे क्षणे रक्तरूपोत्पत्तिरिति सप्तक्षणाः। अथ यदि रक्तरूपोत्पत्तिसमकालं परमाण्वन्तरे कर्म तदाऽष्टक्षणाः तथा हि। परमाणौ कर्म ततः परमाण्वन्तरे विभागः तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः। ततस्तृतीयक्षणे परमाण्वन्तरे रक्तरूपोत्पत्तिः परमाण्वन्तरे कर्म च चतुर्थक्षणे कर्मजविभागः। पञ्चमे क्षणे परमाण्वन्तरपूर्वसंयोगनाशः। षष्ठे क्षणे द्व्यणुकारम्भकसंयोगः। सप्तमे क्षणे द्व्यणुकोत्पत्तिरष्टमे क्षणे रक्तरूपोत्पत्तिरित्यष्टक्षणा अलमतिविस्तरेण। परे तु नित्यज्ञानसुखवत्त्वबोधिका नित्यं विज्ञानमानन्दब्रह्मेत्यादि श्रुतिरीश्वरसिद्धौ प्रमाणं। न चात्र ब्रह्मणि नित्यविज्ञानानन्दयोरभेद एव बुध्यते समानविभक्तिकपदानामभेदबोधकत्व एव व्युत्पत्तेरिति चेन्न। ज्ञानसुखयोरभेदस्येश्वरे बाधितत्वाद् अन्यथा ज्ञानत्वसुखत्वाभ्यां जातिसङ्करप्रसङ्गात् तस्माद्विज्ञानपदस्य विज्ञानवति लक्षणा। आनन्दपदस्यानन्दवति लक्षणा एवञ्चानन्दं ब्रह्मणो रूप तच्च मोक्षे प्रतिष्ठितमित्यत्रानन्दवदभिन्नं ब्रह्मणो रूपमित्यर्थः तच्च मोक्षे प्रारब्धातिरिक्तपाप मोक्षे प्रतिष्ठितं योगजधर्मात्साक्षात्कृतं। यद्यपि योगजधर्मात्षोडशपदार्थतत्त्वज्ञानं मिथ्याज्ञाननिवर्त्तकत्वेन मोक्षे

प्रयोजक तत्त्वमसि श्वेतकेतोस्तदुब्रह्माहमस्मीत्यादिश्रुतिबलादभेदज्ञानं भवतु साक्षान्मोक्षे हेतुस्तथापि तत्त्वमसीत्यादिश्रुत्याऽभेदबोधो न सम्भवति। जहदजहल्लक्षणया वेदान्तिभिरपि शुद्धचैतन्यनिर्विकल्प-कस्यैव हेतुत्वं स्वीकृतं। तथा नैयायिकैरपि जहदजहल्लक्षणया तत्तु-ल्याऽहमिति ज्ञानस्य हेतुत्वं स्वीकृतं। तुल्यत्व शरीराभिन्नत्वेनाभिना-श्रिन्त्वेन चेतनत्वविभुत्वादिनेति। तथा च यथा निर्विषभावनया भेषजा-दिप्रयोगमन्तरेणापि निर्विषो भवति तथैवाभेदभावनया तद्वद्दुःखाभाव-सम्भवाति। तत्त्वार्थस्तु परमात्मनः श्रुत्याद्युक्तासाधारणधर्मेणाप्रामाण्य-शङ्काशून्यनिश्चयः। प्रारब्धातिरिक्तवर्त्तमानपापनाशका मोक्षे कारणमिति दिक्। अत एव नित्यविज्ञानमानन्दमित्यत्र न मत्वर्थीयाच्प्रत्ययविरोधः इत्थं च यः सर्वज्ञ इत्यपि सङ्गच्छते। नन्विदप्रसक्तं धर्माधर्माभ्यां सुख-दुःखयोर्जायमानत्वाद्धर्मत्वेन सुखत्वेन कार्यकारणभाव इतीश्वरे धर्माभा-वान्न सुखमिति। न च चन्द्रशेखरदर्शनजन्यधर्माद्वाजपेयजन्यं सुखं स्यादिति वाजपेयजन्यविजातीयधर्मत्वेन विजातीयस्वर्गत्वेन हेतुहेतुम-द्भावकल्पनावश्यकत्वे धर्मत्वेन सुखत्वेन कार्यकारणभावे मानाभाव इति वाच्यम्। यद्विशेषयोः कार्यकारणभावो ऽसतिबाधके तत्सामान्ययोर-पीति व्याप्तेरेव मानत्वात्। वाजपेयजन्यविजातीयधर्मत्वेन विजातीय-सुखत्वेनेति विशेषकार्यकारणभावे मानाभावाच्च नचोक्तातिप्रसङ्ग एव मान-मिति वाच्यम्। वाजपेयादीनां स्वजन्यव्यापारसम्बन्धेन विजातीयस्वर्गं प्रति हेतुत्वकल्पनेऽतिप्रसङ्गाभावात्। न चोक्तश्रुतिबलादीश्वरे सुखसि-द्धिरिति वाच्यम्। तत्रानन्दजनकत्वस्य दुःखाभाववत्त्वस्य वा बोधना-दिति चेन्न। तद्विशेषयोरिति व्याप्तेरप्रयोजकत्वात् धर्मत्वेन सुखत्वेन का-र्यकारणभावे मानाभावात्। अन्यथा कीर्त्तितवाजपेयाचितश्चन्द्रशेखर-दर्शनजन्यधर्मान्तरसहकृताद्वाजपेयजन्यसुखविशेषः स्यात्। तस्माद्विजा-तीयसुखत्वेन विजातीयधर्मत्वेन वाजपेयजन्यधर्मत्वेन वा कार्यकारणभा-वान्नित्यविज्ञानेत्यादिश्रुतिसिद्धनित्यसुखे बाधकविरहादीश्वरे नित्यसुख-

सिद्धिरिति सङ्क्षेपः । रामकृष्णभट्टाचार्यचरणास्तु कार्यं क्षित्यादिकमंकुरादिकं वा सकर्तृकं कार्यत्वादित्यनुमानेनेश्वरसिद्धिर्न तु प्रत्यक्षेणारूपिद्रव्यत्वेन बाह्येन्द्रियप्रत्यक्षविरहात् । न मानसप्रत्यक्षोपि परमात्मनः परमनोग्राह्यत्वाभावात् । न चात्र पक्षतावच्छेदकं कृतिसाध्यत्वरूपं कार्यत्वं हेत्वाभिन्नमिति वाच्यम् । प्रागभावप्रतियोगित्वस्य कार्यत्वस्य हेतुत्वात् । न च घटादौ सकर्तृकत्वसिध्यांशतः सिद्धसाधनमिति वाच्यम् पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् । न च तथापि क्षितित्वस्य पक्षतावच्छेदकत्वे परमाणौ बाध इति वाच्यम् । जन्यक्षितित्वस्यैव पक्षतावच्छेदकत्वात् । यदि च परमते जन्यभिन्नक्षितेरप्रसिध्या व्यावर्त्याप्रसिद्धिरिति सूक्ष्ममीक्ष्यते तदांकुरत्वेन जन्यकृत्यजन्य जन्यत्वेन वा पक्षत्वमस्तु । न चात्र शरीरजन्यत्वमुपाधिः । नचाङ्कुरादौ साध्यव्यापकत्वसन्देहान्नायमुपाधिरिति वाच्यम् । तस्य सन्दिग्धोपाधित्वस्य दुर्वारत्वात् । तथा च तदाहितव्यभिचारसन्देहात्कथमनुमानमिति वाच्यम् । अनुमितौ व्यभिचारसन्देहस्याविरोधित्वात् अन्यथा पक्षे पक्षसमे वा साध्यसन्देसस्य सत्व त्साध्यभाववद्वृत्तित्वादिरूपव्यभिचारसन्देहसम्भवादनुमानमात्रोच्छेदापत्तेरिति । कृतित्वेनकार्यत्वेनकार्यकारणभावस्य सत्त्वादनुकूललाघवतार्कस्य सत्त्वाच्चेति । अथ तथापि घटपटादौ कुलालकुविन्दादिजन्यत्वसिद्धौ नेश्वरसिद्धिरिति चेन्न । सर्गाद्यकालीनं द्व्यणुकं सकर्तृकं कार्यत्वादित्यनुमानसिद्धद्व्यणुके जीवाजन्यत्वाच्छिवसिद्धिः । न चैवं चेष्टात्वेन शरीरत्वेन हेतुहेतुमद्भावाच्छरीरं विना कथं चेष्टेति नित्यं शिवशरीरं स्यादिति चेत् । न चैवमशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति श्रुतिविरोध इति वाच्यम् । एतच्छ्रुतेर्जन्यशरीराभावबोधकत्वात् अत्र वावेति सम्बोधनं प्रियाप्रिये सुखदुःखे । यद्वा मास्तु तस्य शरीरं तथापि "पश्यत्यचक्षुः स शृणोत्यकर्ण"इति श्रुत्या चक्षुरादिकमन्तरेणापि यथा चाक्षुषादिबोधस्तथा विना शरीरमीश्वरे चेष्टादिकमिति । तदुक्तमाचार्यैः नित्यमपीश्वरज्ञानं शरीरमन्तरेणानिच्छन्तो जन्यमपि सुखज्ञानं मुक्तिकाले स्वीकुर्वन्तस्त्र-

याविरोधोभयं त्रयमपि त्यक्तवन्तस्तौतातिताः। विनैव शरीरं मुक्तिका
जन्यज्ञानाङ्गीकारादीश्वरे विना शरीरं नित्यज्ञानानङ्गीकाराच्च त्रयीकार
विना कार्यमिति विरोधः। ईश्वरस्यानङ्गीकार इति भयं तथा च युक्त
श्रुत्या च सिद्धो जगत्कार्त्तेत्याहुः। अत्र वदन्ति। एवं प्रसिद्धभगवता ए
समानलोकता वैकुण्ठवासः सालोक्यं एवं सारूप्यं तुल्यरूपता चतुर्भुज
दिशरीरं। सार्ष्टि अणिमाद्यैश्वर्यसाम्यं सामीप्यं भगवत्समीपावस्थि
सायुज्यं आत्यन्तिकी दुःखनिवृत्तिरिति इदं नैयायिकानामप्यविरुद्धं साल
क्यं सारूप्यं सार्ष्टि सामीप्यमिति चतुर्विधमुक्तिमतां पुनरावृत्तिस्तदा
तासां तत्वज्ञानजन्यत्वं। यदि न पुनरावृत्तिस्तदा तेषां जीवन्मुक्तत्व
सायुज्यमुक्तौ तु न स च पुनरावर्त्तते इति नैयायिकसिद्धान्तः। अन्ये तु प
मात्मनि जीवात्मलयो लिङ्गशरीरापगमरूपो मोक्षः। घ्राणरसनचक्षुःश्रो
त्वङ्मनांसि वाकपाणिपादपायूपस्थानि प्राणापानव्यानोदानसमाना इ
षोडश च एवं लिङ्गशरीरं। यदि च पृथिव्यप्तेजोवाय्वाकाशेति पञ्च मह
भूतानि लिङ्गशरीरान्तर्गतानीत्युच्यते। तदा पञ्चप्राणास्ततो निकाशनी
इत्याहुः। केचित्तु एकविंशतिदुःखध्वंसो मोक्ष इति प्राचीननैयायिकम
तत्रैकविंशतिदुःखानि षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुः
शरीरं च। तत्र शरीरवदात्मनोपि दुःखसाधनत्वादात्मापि हेयः तथा
जीवात्मलयो जीवात्मनाशो मोक्षः। न चानादेः कथनाशः प्रागभाववत्
न्नाशाभ्युपगमादिति। तन्न आत्मनः समवायिकारणासमवायिकारणयो
भावात्तन्नाशमन्तरेण द्रव्यनाशासम्भवः। इतरथा नित्यद्रव्यमात्रनाशापत्तेः
ननु कर्तृत्वं प्रकृतेर्नपुरुषस्य पङ्कजपत्रवत्तस्य निर्लेपात्। तत्र कर्तृत्वप्र
त्ययस्तु भ्रमः। तदुक्तं भगवता "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" स च पुरुषश्चेतनः। आदिकार
प्रकृतिरचेतना परिणामित्वात्ततो महदादिसर्गस्तथा चान्तःकरणं प्रकृते
परिणामस्तदेव महत्तत्वं बुद्धिश्चोच्यते तत्सत्वासत्वाभ्यां पुरुषस्य
बन्धमोक्षौ प्रकृतिपुरुषयोर्भेदाग्रहाद्यथा निःक्रियेपि पुरुषे कर्तृत्वाभिमा

दर्शयति कथं वेति । ननु दारशब्दस्य नित्यबहुवचनान्तत्वं व्याकरणसिद्धमित्याह अनुशासनिकीति । अनुशासनं व्याकरणनियोगः । इत्थैव अन्यथानुपपत्त्या स्वीकार्यैव । तुल्यमिति । अयं भावः । नामार्थयोर्भेदेनान्वये प्रकारीभूतविभक्त्यर्थोपस्थितिः कारणं प्रकृते च प्रथमायाः साधुत्वमात्रार्थकत्वेन द्वितीयादिवत्कर्मत्वाद्यर्थत्वाभावादिना नञा अघटः पट इत्यत्र घटपदार्थस्य न नञर्थेनान्वयः । तथा चाघटः पट इत्यादौ घटपदोत्तरप्रथमायाः घटप्रतियोगिकत्वरूपसम्बन्धद्वारा घटस्य नञर्थेनान्वय इति सकलजनानां नियतप्रयोग इति । अस्मिन्नर्थेऽनुशासनं दर्शयति तदिदमाहुरिति । नियतप्रयोगाः प्रतियोगिप्रकारकस्वविशेष्यकबोधविषयाः नियमेन प्रतियोग्यन्विता एव स्वार्थवाचका इति यावत् । केचिदव्ययाः नञरूपाः केचिदव्ययाः । यद्वा नियतः प्रयोगो येषां वा ते नियतप्रयोगाः नियमस्तु स्वसमभिव्याहृतघटपदोत्तरमपि प्रथमैव परं तु सा प्रथमा षष्ठ्यर्थे लाक्षणिकी घटस्य नञर्थेनान्वयानुरोधादिति । यथमघटं पटमानयेत्यादावपि कर्मविशेषणीभूतद्वितीयापि लाक्षणिकी तथा च प्रथमायाः षष्ठ्यर्थे लक्षणा व्याकरणसिद्धेति भावः । तथाघटः पट इत्यत्र लाक्षणिकप्रथमार्थप्रतियोगिकत्वद्वारा घटस्याभावेनान्वयः परं तु कथमभावस्य घटेऽन्वय इति शङ्कते तथापीति । नञुक्तेति । तथा च विभक्त्यर्थाश्रयाश्रयीभावलक्षणसम्बन्धद्वारा नञर्थघटयोर्नामार्थयोरन्वये बाधकाभावादित्यर्थः । ततः न घटः पट इति वाक्यात् । घटस्येति । लक्षणया नञपदार्थोऽभाववानेव जातस्तत्राभावस्यैकदेशत्वाद्घटस्य नान्वय इत्यर्थः । तस्य अभावस्य । ससम्बन्धीति । यथा पितृत्युक्ते कस्येत्याकाङ्क्षायाः सत्त्वात्पितृपदं ससम्बन्धिकं तथाऽभाव इत्युक्ते कस्येत्याकाङ्क्षासत्त्वादभावपदमपि ससम्बन्धिकमिति भावः । घटो नित्य इत्यत्र घटस्य नित्यत्वान्वयः स्यादतः ससम्बन्धीत्युक्तं । यथेति । पितृत्वं जनकत्वमपि पुंस्त्वं तत्रैकदेशे जनकत्वे चैत्रस्यान्वय इति ।

अन्येतु समुदाय एवेतरपदार्थान्वयः परम्परा-

सम्बन्धेनेत्याहुः । युक्तं चाभाववल्लक्षकमेवान्यथाघटं पटमित्यत्र समानविभक्तिकत्वानुपपत्तेः । परेतु निपातस्थलेऽन्यैव व्युत्पत्तिरिति घटतदभावयोः प्रतियोग्यनुयोगिभावेनान्वयोपपत्तौ न घटादिपदे लक्षणा अत एव चन्द्र इव मुखमित्यादौ चन्द्र-इवार्थयोर्भेदेनान्वयः अत एव घटो नास्तीत्यत्रापि घटतदभावयोरन्वयो निःकलङ्क इत्याहुस्तन्न । मानाभावात् चन्द्र इव मुखमित्यादौ तु चन्द्रपदं तत्सदृशलक्षकं इवपदं तात्पर्यग्राहकं । अत एव चन्द्र इव मुखं पश्यामीत्यत्र द्वितीया अन्यथा तदनुपपत्तेः अस्तु वा षष्ठ्यर्थ एव विभक्तौ लक्षणानुशासनानुग्रहाद् घटो नास्तीत्यत्रापि तथेत्यदोषः ।

ईदृशस्थले एकदेशान्वयास्वीकर्त्तुः कस्यचिन्मतमाह अन्येत्विति । समुदाय एवेति । अभाववत्पटादिसमुदाय एवेत्यर्थः । इतरपदार्थान्वयः घटादिपदार्थान्वयः । परम्परासम्बन्धेन स्वप्रतियोगिकभेदसम्बन्धेन ससम्बन्धिकस्थले एकदेशान्वयस्य निखिलवादिसिद्धत्वात् । आहुरित्यनास्वरसः । ननु सर्वमिदं अभावपदस्याभाववल्लाक्षणिकत्व एव स्यात् तदेव न सम्भवति मानाभावादिति सिंहावलोकन्यायेनाह युक्तमिति । अभाववल्लाक्षणिकमेव अघटः पट इत्यादौ नञ्पदं अभाववल्लाक्षणिकमेव अन्यथा लाक्षणिकत्वास्वीकारे । समानेति । अभेदान्वये समानविभक्तिः प्रयोजिकाऽभावपदस्याभाववल्लाक्षणिकत्वाभावे ऽभेदान्वयाभावात्समानविभक्तिकत्वानुपपत्तिरित्यर्थः । अत्राघटः पट इत्यत्रान्वयानुरोधान्नामार्थयोरित्यत्र निपातातिरिक्तनामार्थयोरित्यवश्यं वाच्यमिति कस्यचिन्मतं दूषयितुमाह परेत्विति । अन्यैव अव्ययनिपातस्थले नामार्थयोर्भेदेना-

न्वयस्वीकारादन्यैव प्रतियोग्यनुयोगिभावेन प्रतियोग्यनुयोगिकत्वसंबधेन घटादिपद इति । घटादिपदनिरूपिता घटसंबन्धिनि लक्षणेत्यर्थः । अव्ययनिपातातिरिक्तेत्यस्य कृत्यं दर्शयति अत एवेति अत एव अव्ययनिपातातिरिक्तेति विशेषणादानादेव । अत्रेवार्थः सादृश्यं तथा च चन्द्रसादृश्यवन्मुखमिति शाब्दबोधस्तत्रेवार्थे सादृश्ये प्रतियोगितया चन्द्रः प्रकारः सादृश्य चाधिकरणतया मुखे प्रकारः । निपातातिरिक्तेत्यस्य तत्स्यलेपि कृत्यं दर्शयति । अत एवेति । मानाभावात् नामार्थयोरित्यत्र निपातातिरिक्तेति विशेषणादाने मानाभावात् । ननु तर्हि कथं चन्द्र इव मुखमित्यादावन्वयबोध इत्यत आह चन्द्रेति । तथा च चन्द्रसदृशाभिन्न मुखमित्यन्वयः । न च चन्द्रो मुखमित्यत्र चन्द्रपदं सदृशलक्षकं कुतो नेति वाच्यम् । सदृशलक्षणायां इवपदसमभिव्याहारस्य प्रयोजकत्वात् । अत एव इवपद तात्पर्यग्राहकमित्युक्तं । नचैवमिवपदस्य सादृश्ये शक्तिरेवास्त्विति वाच्यम् । चन्द्रमिव मुखं पश्यामीत्यत्र चन्द्रपदोत्तरं द्वितीयानुपपत्तेः । चन्द्रपदस्य चन्द्रसादृश्यवति लक्षणायां तु तस्याभेदान्वयाद्द्वितीयोपपत्तिरिति । अत एव सदृशे लक्षणास्वीकारादेव द्वितीया चन्द्रपदोत्तद्वितीया । अन्यथा सदृशलक्षणाया अस्वीकारे । तदनुपपत्तेरिति । अभेदान्वये समानविभक्तिकत्वं प्रयोजकं । सदृशे लक्षणाया अभावे त्वभेदान्वयाभावादेव चन्द्रपदोत्तरं द्वितीयायाः किं प्रयोजनमिति भावः । ननु तथापि चन्द्रपदार्थेवपदार्थयोरन्वयो नोपपादितः किं तु चन्द्रमुखपदार्थयोरित्यपरितुष्यन्नाह अस्तु वेति । विभक्तौ चन्द्रपदोत्तरद्वितीयाविभक्तौ तथा च चन्द्रपदार्थस्य स्वनिरूपकत्वरूपसंबन्धद्वारा सादृश्यरूपेवपदार्थे भेदेनान्वयेपि न क्षतिः । न च तथापीवार्थमुखयोः कथमन्वय इति वाच्यम् । इव पदार्थस्य सादृश्यवल्लाक्षणिकत्वात् । यद्वा सुब्विभक्तौ लक्षणां प्रतिपादयितुमाह अस्तुवेति । द्वितीयाविभक्तेः सादृश्यरूपसंबन्धात्मकषष्ठ्यर्थे लक्षणा इवपदं तात्पर्यग्राहकं । अथवा चन्द्र इव मुखमित्यत्र इवपदस्य सादृश्यार्थत्वे चन्द्रपदार्थस्येवपदार्थेन भेदान्वयो न स्यादित्यत

आह अस्तु वेति । षष्ठ्यर्थ एव । निरूपितत्वसंबन्धरूपषष्ठ्यर्थ एव विभक्तौ । तथा च चन्द्रनिरूपितसादृश्यवदभिन्नं मुखमिति बोधः । न च सादृश्यस्य कथ मुखेऽन्वय इति वाच्यम् इवपदोत्तरलुप्तविभक्तेः स्मरणादिवपदस्य सादृश्यवति लक्षणाविवक्षणाच्चेति संक्षेपः । नन्वत्र का वा युक्तिरत आह अनुशासनेति यथा नञसमभिव्याहृतस्थले विभक्तौ लक्षणानुशासनिकी तथैव समभिव्याहृतस्थलेपीति । अनुशासनं तु पूर्वोक्तं नियतप्रयोगा हि-केचिदव्यया इति । तथा प्रथमायायाःप्रतियोगित्वे लक्षणा ।

अन्येतु घटो नास्तीत्यत्र घटस्याभावोऽस्तीति नार्थः तथासति भूतले घटो नास्तीत्यस्याप्यापत्तेः अभावस्यैकत्वादिति किन्तु भूतलवृत्त्यभावप्रतियोगी घटोस्तीति तन्न। क्वेत्यधिकरणाकाङ्क्षापत्तेः कथन्तर्हि घटौस्त इत्यादीति चेत् भावनान्वय्यभावप्रतियोगिनि सङ्ख्यान्वयात्कथमिति चेत्तथैव प्रतीतेरिति गृहाण ।

परेतु इह भूतलास्तित्वरूपाख्यातार्थनिषेध एव घटे प्रतीयते न पचति चैत्र इत्यत्रेव नातो द्विवचनानुपपत्तिः । नन्वेवं जातौ सत्ता नास्तीत्यत्र का गतिः जातिवृत्तित्वाभावस्य सत्तायामसत्त्वाज्ज जातिसमवेतत्वस्यैवाप्रसिद्ध्या निषेद्धुमशक्यत्वादिति चेत् या गतिर्जातिर्न सत्तावृत्तिरिति वाक्यस्य । अयो-ग्यमेवेदं वाक्यं वृत्तिपदं वा साक्षात्सम्बन्धावच्छि-न्नवृत्तिपरमिति तुल्यं । तथापि नञर्थो निषेधो घटे कथमन्वेतीति चेन्न । निपातातिरिक्तनामार्थस्य हि

नामार्थेनाभेदान्वयो न नामार्थमात्रस्येति प्रतियन्ति स्यादेतद्घटो नायमित्यादौ भेद एव प्रतीयते भूतले न घट इत्यत्रात्यन्ताभाव एवेत्यत्र किं नियामकं । अधिकरणवाचकपदे सप्तमीविभक्तिरत्यन्ताभावबोधे तन्त्रं प्रतियोग्यनुयोगिपदयोः समानविभक्तिरन्योन्याभावबोध इति चेन्न ।

एवं प्रतिपादयितुकामस्य कस्य चिद्विवक्षामाह अन्येत्विति । तथा इति घटोनास्तीत्यादौ घटस्याभावोस्तीति विवक्षिते सति। भूतले इति ॥ घटद्वयप्रतियोगिकाभावो भूतलेऽस्तीत्यर्थः । भावनाविशेष्ये सङ्ख्यान्वयादाख्यातार्थरूपभावनान्वयिनोऽभावस्यैकत्वादेकत्वसङ्ख्याया अन्वय एवोचित इत्यभिप्रायवानाह अभावस्येति । इदमुपलक्षणं भूतले घटौ नस्त इत्यपि न स्यात् भावनान्वयिनोऽभावस्यैकत्वात् । किन्त्विति । तथा च घटौ नस्त इत्येव प्रयोगो न तु घटौ नास्तीति भावनान्वयिघटयोर्द्वित्वान्वयादिति । भवतु मन्मतं दुष्टं तथापि घटौ नस्त इत्यत्र घटयोरभावस्यैकत्वात्कथं भवन्मतेप्यभावे द्वित्वान्वय इत्याह कथमिति । भावनाख्यातार्थस्तदन्वय्यभावस्तत्प्रतियोगिघटे सङ्ख्यान्वयादित्यर्थः। ननु भाविनान्वय इति व्युत्पत्तेः कथमभावप्रतियोगिनि सङ्ख्यान्वय इत्यत आह अथेवेति। तथा चाभावस्थले भावनान्वय्यभावप्रतियोगिनि सङ्ख्यान्वय इति व्युत्पत्तेरित्यर्थः । अथ यथा पचति चैत्र इत्यत्र पाकानुकूला कृतिश्चैत्रे न पचति चैत्र इत्यत्रापि पाककृतिरूपाख्यातार्थाभाव एव चैत्रे प्रतीयते । तथा भूतले घटोस्तीत्यत्र भूतलास्तित्वरूपाख्यातार्थस्य घटे भानाद्भूतले घटो नास्तीत्यादावपि भूतलास्तित्वरूपाख्यातार्थनिषेध एव घटे प्रतीयेत इत्यभावप्रतियोग्यन्वयौ तुल्ययोगक्षेमाविति शिरोमणिमतमाह परेत्विति । इह भूतले घटो नास्तीत्यादौ । अस्तित्वेति । लक्षणया अस्तित्वरूपाख्यातार्थनिषेध इत्यर्थः । नात इति । भूतले घटौ नस्त इत्यादौ

घटद्वये भूतलास्तित्वाभाव एव प्रतीयत इत्यर्थः । एवं भूतले घटा न सन्तीत्यत्रापि बोध्यम् । एवं अधिकरणास्तित्वाभावस्य प्रतीयमानत्वे असत्त्वादिति । एकार्थसमवायप्रत्यासत्त्या सत्तायां जातिवृत्तित्वस्य सत्त्वाज्जातिवृत्तित्वाभावस्यासत्त्वादिति । जातिसमवेतत्वस्य समवायेन जातिवृत्तित्वस्य । एव जातिसंयुक्तत्वस्येत्यत्रापि बोध्यम् । प्रतिबन्ध्या समाधत्ते या गतिरिति सत्ता न जातिवृत्तिरित्यत्र जातिवृत्तित्वत्वावच्छिन्नाभावे न सत्तायां एकार्थसमवायेन जातिवृत्तित्वस्य सत्ताया सत्त्वात् । जातिसमवेतत्वस्याप्रसिद्धत्वेन तत्प्रतियोगिकाभावासिद्धेः तथा च जातिवृत्त्यभावप्रतियोगिसत्तेवेति समाधेय तदा दीयतां प्रकृतेपि दृष्टिः । ननु सत्ता न जातिवृत्तिरिति वाक्यस्यायोग्यत्वात्तत्प्रतिबन्धिर्न युज्यते इत्यात अयोग्यमिति इदं वाक्यं सत्ता न जातिवृत्तिरितीदं वाक्य । न चेतस्माच्छब्दाच्छाब्दबोधस्य जायमानत्वात्कथमयोग्यत्वमित्यत आह वृत्तीति इत्थं च सत्ता न जातिवृत्तिरित्यत्रैकार्थसमवायस्य परम्परासम्बन्धस्य सत्त्वेपि साक्षात्साम्बन्धेन जातिवृत्तित्वाभावस्य सत्तायां सत्वादिति भावः । तुल्यमिति । जातौ सत्ता नास्तीत्यत्रापि तथैवोच्यतामित्यर्थः तथापि अधिकरणवृत्तित्वाभावस्य घटादौ विवक्षणेपि । निषेधः भूतलास्तित्वाभावः । अभेदेनेति निपातातिरिक्तनामार्थस्य नामार्थेन सहाभेदान्वयो निपातार्थयोस्तु भेदेनान्वये बाधकाभावादित्यर्थः । न नामार्थमात्रस्येति । तथा च भूतलास्तित्वाभावस्य घटादावन्वय इति भावः अत्यन्ताभाव एव संसर्गाभावएव अधिकरणेति भूतले घटो नास्तीत्यादावधिकरणवाचकभूतलपदे सप्तम्याः सत्त्वात्संसर्गाभावो विषयः । प्रतियोगीति । घटो न पट इत्यत्र प्रतियोग्यनुयोगि पदयोः पटघटपदयो समानविभक्तिकत्वादन्योन्याभाव इत्यर्थः ।

**न पचति चैत्रश्चैत्रस्य न धनमित्यत्र सप्तम्य भावात् । अलघुपचत्यत्र समानविभक्तेरभावाच्च अत्राहुः नञ विनिर्मोके यत्र प्रतियोग्यनुयोगिपदयो**

रभेदान्वयबोधे आकाङ्क्षा तत्रान्योन्याभावबोधकत्वमन्यत्रात्यन्ताभावबोधकत्वमिति व्युत्पत्तिः । अस्ति च न घटः पट इत्यत्र नञासत्त्वे घटपटयोरभेदान्वयबोधे आकाङ्क्षा अतस्तत्रान्योन्याभावप्रत्ययः । भूतले न घट इत्यत्र नञविनिर्मोके नाभेदान्वये आकाङ्क्षेति तत्रसंसर्गाभावप्रत्यय एवेति सङ्क्षेपः ॥

अधिकरणवाचकसप्तम्याः संसर्गाभावबोधनियामकत्वे व्यभिचारं दर्शयति । न पचतीति । पाकानुकूलकृत्यभाववांश्चैत्र इत्यत्र धनं चैत्रस्वस्वाभाववदित्यत्र च विनापि सप्तमीमत्यन्ताभावस्य विषयत्वादित्यर्थः । अन्योन्याभावनियामकत्वे व्यभिचारं दर्शयति अलघ्विति । अत्र लघुभिन्नपाकानुकूलकृतिमत्त्वबोधे समानविभक्तिकत्वं विनाप्यन्योन्याभावस्य विषयत्वादित्यर्थः । नञविनिर्मोके नञासत्त्वे । प्रतियोग्यनुयोगिपदयोः घटभूतलयोः । अभेदान्वयबोधे आकाङ्क्षा । भूतलं घट इत्यभेदान्वयबोधे आकाङ्क्षा । तत्रेति । नञसमभिव्याहृतस्थले भूतलं न घट इत्युक्ते अन्योन्याभावबोध इत्यर्थः । अन्यत्र नञविनिर्मोके अभेदान्वयाकाङ्क्षाविरहे अन्यबोधकत्वं । अत्यन्ताभावबोधकत्वम् ।

तदेव व्युत्पादयति अस्ति चेति । अन्योन्याभावप्रत्ययः नञसत्त्वेऽन्योन्याभावप्रत्ययः । अत्रायं सङ्क्षेपार्थः । यदि संसर्गाभावबोधेऽनुयोगिनि सप्तमी नापेक्षिता तर्हि भूतले न घटइत्यत्र कथं संसर्गाभावबोधः । यदि वापेक्षिता । तर्हि न पचति चैत्र इत्यत्र कथमिति चेत् । यादृशपदोपस्थापितस्य प्रतियोगिनो यादृशपदोपस्थापितानुयोगिन्याधाराधेयभावेनान्वयबोधस्तत्र तादृशपदोत्तरनञपदोपस्थाप्यसंसर्गाभावस्याधाराधेयभावेनान्वयबोधः । यथा पचति चैत्र इत्यत्र तिङर्थकृतेः प्रथमान्तोपस्थापितचैत्रे संसर्गमर्यादयाधाराधेयभावेनान्वय इति तत्रानुयोगिनि चैत्रे कृत्यभावस्याप्याधाराधेयभावेनान्वयः । इत्थं च चैत्रे पचतीत्यत्र नान्वयबोध

इति चेन्न न पचतीत्यत्रापि नान्वयबोध इत्यत्र बोधाभावे को हेतुरिति चेत् । विशेष्यतया लडाद्यर्थबोधं प्रति प्रथमान्तपदोपस्थापितत्वस्य नियामकत्वादिति गृहाण चैत्रस्य धनमित्यत्र तु चैत्रनिरूपितस्वत्वस्य षष्ठ्यर्थस्य धनेऽन्वयाच्चैत्रस्य न धनमित्यत्रापि तादृशस्वत्वाभावस्य धनेऽन्वयः ॥

अत एव प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति सङ्गच्छते । भूतले घट इत्यादौ त्वाधाराधेयभावभानार्थं सप्तम्यावश्यकी अन्यथा नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नतया भूतलघटयोराधाराधेयभावान्वयानुपपत्तिरिति भूतले न घटत्यत्रापि सप्तम्यपेक्षा स्यादिति । अत्रेदं प्रतिभाति । चैत्रस्य धनमित्यत्र षष्ठ्यर्थः स्वामित्वमेवास्तु तस्य निरूपकतासम्बन्धेन धनेऽन्वय इति चेन्न स्वामित्वस्य धनवृत्तित्वाभावेन चैत्रीयेऽपि धने नेदं चैत्रस्येति प्रयोगापत्तेः । न चैवं चैत्रस्य राजायं न मैत्रस्येत्यत्र कथमिति वाच्यम् । तत्र षष्ठ्याः स्वत्वनिरूपकस्वामित्वे लक्षणास्वीकारात् । अत्र यदेव स्वत्वं तदेव स्वामित्वं परं तु धने स्वामित्वं निरूपकतासम्बन्धेन स्वामिनि त्वाश्रयतासम्बन्धेन एवं स्वत्वमपि । न चैवं धनस्वामिनि चैत्रे चैत्रो न स्वामीति प्रयोगापत्तिः । निरूपकतासम्बन्धेन तत्र स्वामित्वाभावादिति वाच्यम् । निरूपकतासम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितावच्छेदकत्वादत एव चैनन्धनमिति न प्रयोगः । निरूपकतासंबन्धस्य प्रतियोगितानवच्छेदकत्वेनाधिकरणताया अनियामकत्वादिति । तच्च स्वत्वं पदार्थान्तरं प्रतिग्रहोपादानपितृमरणक्रयादिनोत्पद्यते । दानादिना च नश्यति । प्रतिग्रहस्त्विदं मदीयमित्यवधानविशेषः तत्रेदमेतदीयं न मदीयमिति प्रदातुरवधानमप्यपेक्षितं । उपादानं त्वारण्यकसमित्कुशादिग्रहणमिति दिक् । अथ यथेष्टभक्षणादियोग्यत्वमेव स्वत्वमिति चेत् । तच्छास्त्रस्य स्वत्वघटितत्वेन स्वत्वाप्रतीतौ तत्प्रवृत्तेरनुत्पत्त्यापत्तेः तस्मादतिरिक्तमेव स्वत्वं परस्वं नाददीतेति शास्त्रस्य प्रमाणत्वादिति । ननु प्रतिग्रहादीनां परस्परव्यभिचारिणां कथं स्वत्वावच्छिन्नं प्रति कारणताग्रह इति चेत् । प्रतिग्रहादीनामेकशक्तिमत्त्वकल्पनेन स्वत्वावच्छिन्नं प्रति शक्ते

रेव जनकतावच्छेदकत्वेनातिप्रसङ्गनिरासात् । एतेन तृणारणिमणिस्थले तृणादीनां संयोगत्वादिना वह्नित्वावच्छिन्नं प्रति न हेतुत्वं परस्परव्यभिचारादिति तृणसंयोगादिजन्यतावच्छेदक जातित्रयं वह्नौ स्वीकार्यमिति प्राचीनमतमपास्तम् । तत्र जातित्रयकल्पनापेक्षया तृणवह्निसंयोगरविरश्मिमणिसंयोगप्रमथारणिविजातीयसंयोगे एकस्या एव शक्तेः कल्पनस्य न्याय्यत्वात् । सा शक्तिरतिरिक्ता न च तेषु संयोगेषु जातिविशेष एव कल्प्यतां किमतिरिक्तशक्तिकल्पनयेति वाच्यम् नोदनत्वादिना जातिसङ्करप्रसङ्गादिति सङ्क्षेपः ।

**व्यञ्जना च न वृत्त्यन्तरं लक्षणयैव तदर्थसिद्धेः । नन्विदमयुक्तं तथा हि लक्षणायां मुख्यार्थे इतरान्वयानुपपत्तिर्बीजं न च व्यञ्जनायां सा सर्वत्रास्ति गच्छ गच्छसीत्यादौ तदभावादतो वृत्त्यन्तरमास्थेयमिति चेन्न । किमिदं लक्षणाबीजत्वं न तावज्जनकत्वं गङ्गातीरयोः सम्बन्धस्यानुपपत्तिज्ञानाजन्यत्वात् । नापि तज्ज्ञापकत्वं अनुपपत्तिज्ञानमन्तरेणापि गङ्गातीरयोः सम्बन्धस्य चक्षुरादिना ग्रहात् नापि तात्पर्यग्राहकत्वं तात्पर्यव्याप्यान्तरतोपि तद्ग्रहात् । अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेत् न यष्टीः प्रवेशयेत्यत्र व्यभिचारात् । तात्पर्यविषयानुपपत्तिरत्राप्यस्तीति चेत्तर्हि तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्तु सा चेहाप्यस्ति ॥**

अथ गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिकं बुध्यते तत्र शैत्यपावनत्वादिप्रयोजनं न गङ्गापदशक्तिप्रतिपाद्यं गङ्गापदनिष्ठसङ्केताविषय-

त्वात् । नापि गङ्गापदलक्षणाप्रतिपाद्यं मुख्यार्थबाधादिरूपहेत्वभावात्त-दुक्त नाभिधा समयाभावाद्वृत्त्यभावाच्च लक्षणेति। तथा च व्यञ्जनेत्यादिना-तदर्थसिद्धिः शैत्यपावनत्वादिप्रतीतिरूपार्थसिद्धिः शैत्यपावनत्वादिविशे-षविशिष्टतीरस्य लक्षणयैवोपपत्तौ किं व्यञ्जनयेति भावः । न नु न शैत्यपाव-नत्वादिविशिष्टे लक्षणा तथा हि यावता विनान्वयानुपपत्तिस्तावत एव लक्षणाजन्यबोधविषयत्व । नहि शैत्यपावनत्वादिकमन्तरेणान्वयापपत्ति-स्तथा च घोषान्वयानुपपत्त्या गङ्गापदस्य तीरे लक्षणा । व्यञ्जनायामन्य-देव नियामकमिति शङ्कते । नन्विति । इदं लक्षणया व्यञ्जनिकार्थसि-द्धिकथनं मुख्यार्थे प्रवाहादिरूपमुख्यार्थे ? इतरान्वयानुपपत्तिः। घोषाद्यन्व यानुपपत्तिः। बीजमिति । न च तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्त्विति-वाच्यम्। तात्पर्यज्ञानमन्तरेणापि गङ्गायां घोष इत्यादौ मुख्यार्थेनुपपत्तिज्ञा-नेनापि शक्यसंबन्धेनोपस्थापिततीरादेरन्वयानुभवात् सैन्धवमानयेत्यत्रापि लक्षणापत्तेश्च । सा इतरान्वयानुपपत्तिः । गच्छेति । गच्छगच्छसि चे-त्कान्त पन्था नः सन्तु ते शिवाः ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्-इत्यत्र यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य मुख्यार्थे प्रवाहे घोषरूपे-तरपदार्थान्वयानुपपत्तिस्तथा गच्छेत्यस्य मुख्यार्थगमने कान्तरूपेतरपदार्थे-न्वयानुपपत्तेरभावादित्यर्थः । तदभावात् मुख्यार्थे इतरपदार्थान्वया-नुपपत्तेरभावात् । एवं च गच्छगच्छसीत्यादौ मागा इति पदप्रतिपाद्यगम-नाभावबोधार्थमवश्यं व्यञ्जनाख्यवृत्त्यन्तरं वाच्यमित्याहात इति । लक्ष-णायां तादृशान्वयानुपपत्तिर्बीजमित्यत्र बीजपदार्थमनूद्य दूषणपूर्वकं व्यञ्जना खण्डयति किमिदमित्यादिना तज्जनकत्वं। इतरान्वयानुपप-त्तिज्ञानस्य जनकत्वं। गङ्गातीरयोरिति तादृशसबन्धात्मकलक्षणायाम-नुपपत्तिज्ञानस्य जनकत्वाभावादित्यर्थः ॥ तज्जन्यत्वाभावेपि तज्ज्ञाप-कत्व भविष्यत्येवेत्यत आह नापीति । तज्ज्ञाकत्वं । अनुपपत्तिज्ञान-ग्राह्यत्वं । तात्पर्यग्राहकत्वं इतरान्वयानुपपत्तिज्ञानस्य लक्षणातात्पर्यग्राह-कत्वं तात्पर्यव्याप्यान्तरतोपि तात्पर्यव्याप्यान्तरप्रकरणादितोपि तद्ग्रहात्।

लक्षणारूपसंबन्धग्रहात् । भोजनप्रकारेणेसति यष्टीः प्रवेशयेत्युक्ते यष्टि-धरप्रवेशेनान्वय इति । तत् लक्षणाबीजत्व । यष्टीनि । प्रवेश रूपेतरपदार्थस्य यष्टिपदार्थेऽन्वयानुपपत्तिमन्तरेणापि लक्षणाजन्यशाब्द बोधोदयाद्व्यभिचार इत्यर्थः । ननु तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्तु तथा च तत्र भोजनतात्पर्यानुपपत्तेः सत्त्वादाह तात्पर्येति अत्रापि यष्टिप्रवेशपदार्थेपि । तात्पर्यविषयानुपपत्तिः तात्पर्यविषयीभूतभोज नार्थान्वयानुपपत्तिः । इहापीति । गच्छसि चेदित्यादौ गमनपदं मार च्छेति पदप्रतिपाद्ये गमनाभावे लाक्षणिकमित्यर्थः । अत्रायं समुदि तार्थः । व्यञ्जना न वृत्त्यन्तरं । लक्षणयैव निर्वाहात्तथा हि लक्षणाय तात्पर्यानुपपत्तिर्बीजं । यत्र गच्छसीत्यादावपि गमनाभावबोधतात्पर्येण गच्छेत्युक्तं तत्र गमनबोधे तात्पर्यानुपपत्तिज्ञाने सत्येव गमनाभावे लक्ष णेति । अथ यत्र गङ्गायां घोष इत्युक्तं तत्र प्रवाहे घोषान्वयोऽनुपपन्न इत्यनुपपत्तिज्ञानं लक्षणायां कारणमिति चेन्न मुख्यार्थे इतरान्वयानुपपत्ति ज्ञानं तात्पर्यानुपपत्तिज्ञानद्वारा लक्ष्यार्थान्वयबोधे प्रयोजकं न तु कारण यष्टीः प्रवेशयेत्यत्र व्यभिचारात् । तात्पर्यानुपपत्तेस्तु सर्वसाधारण्या दिति दिक् ।

**स्यादेतद्गङ्गायां घोष इत्यादौ लक्षणाप्रयोजन शैत्यपावनत्वादिप्रतीतिर्न्न च तत्प्रतीतिर्लक्षणासा ध्या प्रयोजनाभावात् लक्षणायाश्च प्रयोजनवत्त्वनि यमादिति चेन्न । लक्षणाप्रतीतेरेव प्रयोजनत्वात् तथापि प्रयोजनान्तरं नास्तीति चेत्ततः किं लक्ष णाया हि प्रयोजनवत्त्वेन नियमो न तु लक्ष्यप्रतीत्य तिरिक्तप्रयोजनवत्त्वेन गौरवादप्रयोजकत्वाच्च ।**

अथ गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिप्रतीतिमुत्पादयितुं लक्षणा क्रियते । न चानुमानादेव प्रयोजनप्रत्यय इति वाच्यम् । व्याप्ति

ज्ञानादिविलम्बेनापि शैत्यपावनत्वादेः शब्दैकगम्यत्वादिति तत्प्रतीति-र्व्यञ्जनाद्वारिकैव । तदुक्तं यस्य प्रतीतिमाधातुं लक्षणासमुपास्यते फले-शब्दैकगम्येत्र व्यञ्जनान्नापरा क्रियेत्यभिप्रायवानाह स्यादेतदिति । ननु शैत्यपावनत्वादिविशिष्टतीरलक्षणयैव तत्प्रतीतिर्भविष्यतीति किं व्यञ्ज-नयेत्यत आह न चेति । प्रयोजनाभावात् । प्रयोजनविशिष्टे लक्षणाया अभावात् । तदुक्तं । प्रयोजनेन सहितं लक्षणीयं न युज्यत इति । ननु प्रयोजनविशिष्टे लक्षणानेत्यत्र को हेतुरित्यत आह लक्षणायाश्चेति । तथा च प्रयोजनस्य लक्ष्यत्वे लक्षणायाः सप्रयोजकत्वं भज्येत । न हि शैत्यपावनत्वादि लक्ष्य सप्रयोजनं । लक्ष्यप्रयोजनयोर्भिन्नत्वात् । तदुक्तं । ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतमिति । यथा ज्ञानस्य विषयो घटः फलं तु ज्ञातताऽनुव्यवसायो वा । तथा लक्षणाजन्यज्ञानविषयस्तीरादिः । फलं शैत्यपावनत्वादिप्रतीतिः । तथा लक्ष्यप्रयोजनप्रतीतेर्भेद इति भावः । प्रयोजनस्य लक्ष्यप्रतीतिभिन्नत्वे मानाभावादित्याह । नेत्यादि । तथा च शैत्यपावनत्वादिविशिष्टे लक्षणास्वीकारेपि क्षतिविरहादिति भावः । यद्वा ननु गङ्गापदाल्लक्षणया तीरप्रतीतिस्तत्फलं शैत्यपावनत्वादिप्रतीतिरिति न लाक्षणिकप्रतीतौ शैत्यपावनत्वादिकं विषय इत्यत आह नेत्यादि तथा च शैत्यपावनत्वादिप्रतीतेस्तीरप्रतीतिफलत्वाभाव इति । ननु शैत्य-पावनत्वादिविशिष्टे लक्षणास्वीकारेपि लक्षणायाः सप्रयोजकत्वनियमा-त्प्रयोजनान्तरमवश्यं वाच्यम् तच्च नास्तीत्यभिप्रायवानाह तथापीति । ततः किमिति । लक्ष्यप्रतीत्यतिरिक्तप्रयोजनविरहे किमनिष्टमित्यर्थः । लक्षणाया इति । तथा च प्रयोजनस्य लक्ष्यप्रतिपत्तिभिन्नत्वे मानाभा-वादिति भावः । ननु प्रयोजनस्य लक्ष्यप्रतीतिभिन्नत्वं यदि युक्तिसिद्धं तदा किं गौरवेणेत्यत आहाप्रयोजकत्वाच्चेति । तथा च प्रतिज्ञामात्रेण नार्थ-सिद्धिः प्रयोजनेनेत्यादिकं तु प्रतिज्ञामात्रं न यौक्तिकमपीति युक्तिरपि नास्तीति भावः । यद्वा । प्रयोजनाभावादिति । यथा शुद्धतीरस्य लक्ष्यत्वे शैत्यपावनत्वादिप्रतिपत्तिः प्रयोजनं तथा शैत्यपावनत्वादिविशिष्टस्य

लक्ष्यत्वे तु प्रयोजनाभावादित्यर्थः । ननु मास्तु प्रयोजनमित्यत आह लक्षणाया इति अन्यद्व्याख्यानं पूर्ववत् ।

**स्यादेतत् नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादि निर्णायकं तथा च यत्र प्रकरणादिशून्यार्थान्तरं प्रतीयते तत्र नाभिधामूलं सहकार्यभावात् नापि लक्षणा अयोग्यत्वादिति चेन्न । प्रकरणादीनामननुगततया सहकारित्वानुपपत्तेः ।**

ननु मास्तु लक्षणामूलिका व्यञ्जना परन्त्वभिधामूलिका तु भविष्यत्येवेत्यत आह स्यादेतदिति यद्वा नानार्थस्थले प्रकरणादिनार्थविशेषे निर्णीतेप्यर्थान्तरबोधकत्वं व्यञ्जनयेति । तदुक्तं अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति संयोगाद्यैः स शङ्खचक्रो हरीत्यादौ शङ्खचक्रादिसंयोगाद्यैः । अवाच्यार्थधीकृद्व्यापृतिः अशङ्खचक्रधीकृद्व्यापारः अञ्जनं व्यञ्जनेत्यर्थः । भद्रात्मने दुराधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य यस्यानुपप्लुतगते परवारणस्य दानाम्बुसेकसुभगः सततंकरोभूदित्यत्र प्रकरणादिना राजबोधो व्यञ्जनयेत्यभिप्रायवानाह स्यादेतदिति । नानार्थस्थले सैन्धवमानयेत्यादौ भद्रात्मन इत्यादौ चक्रावत्प्रथमं । अर्थविशेषप्रत्यये तुरगस्य प्रत्यये राज्ञः प्रत्यये च । अर्थान्तरं गजरूपार्थान्तरं च । ननु शक्त्यैव निर्वाहो भवीष्यतीत्यत आह नाभिधेति । अभिधा शक्तिः । सहकारीति । नानार्थस्थले सैन्धवमानयेत्यादौ शक्त्या बोधजनने प्रकरणादिः सहकारि । अर्थान्तरबोधने तु प्रकरणादिरूपसहकार्यभावान्नाभिधामूलकत्वमित्यर्थः । यद्वा सकृदुच्चरितः शब्दः सकृदर्थं गमयतीतिन्यायात्तुरगबोधे जाते सति शक्त्या न लवणबोधो जायते तथा सहकार्यभावात् अभिधायाश्चकसङ्केताभावात् । तदुक्तं । नाभिधा समयाभावादिति समयः सङ्केतः इत्थं चात्रापि समयाभावात् । सङ्केताभावात् । अयोग

द्विति । मुख्यार्थबाधादिरूपप्रकारणाभावादित्यर्थः तदुक्तं । हत्वभावान्न लक्षणेति । यद्वा । सहकार्यभावात् । प्रकरणादिरूपसहकार्यभावात् । अयोगात् । मुख्यार्थायोगात् । प्रकरणादिनामिति । तथा चानुगतरूपेण कार्यकारणभावग्रहाभावाद्विति भावः ।

तात्पर्यग्राहकत्वेनैषामनुगम इति चेत्तर्हि लाघवात्तात्पर्यज्ञानमेव हेतुरस्तु तच्चेहाप्यस्ति। स्यादेतत् लक्षणा हि पदवृत्तिरियं तु पदतदेकदेशवाक्यरचनार्थभङ्ग्याद्याकाराश्रितेत्याश्रयभेदाद्भेद इति चेन्न । असिद्धेः । तदेकदेशादयो ह्यर्थविशेषतात्पर्यग्राहका न तु तत्प्रतिपादका इति । स्यादेतत् लक्ष्ये तात्पर्यज्ञानं लक्षणासहकारि न तु व्यङ्ग्यार्थे तात्पर्यग्रहो नियतः स्वार्थरचितकाव्यादौ तात्पर्यविषयस्यापि व्यङ्ग्यस्य चमत्कारादिति चेन्न। व्यङ्ग्ये तात्पर्यग्रहस्यानपेक्षायां गङ्गायां घोष इत्यादौ शैत्यादिकमेव प्रतीयते न तु केशबालुकादिमत्त्वमिति नियमो न स्यात् । वासनाविशेषपरिपाकान्नियम इति चेत्तर्हि लक्षणास्थलेपि स नियामकोस्तु कृतं तात्पर्यग्रहेणेति ।

ननु तात्पर्यग्राहकत्वेन प्रकरणादीनामनुगमात्तेन रूपेण कारणतायहो भविष्यतीत्यत आह तात्पर्येति । लाघवेति । तार्यग्रहस्यावश्यकत्वेन लाघवादित्यर्थः । स च तात्पर्यग्रहोपि । अर्थान्तरबोधेपि । तथापि नेयं लक्षणान्तर्गता किंत्वाश्रयभेदाद्भिन्नेत्याशङ्कते स्यादेतदिति । इयं तु । व्यञ्जना तु पदं तदेकदेशः । यदेकदेशः । वाक्यं । रचना । आनुपूर्वीविशेषः । अर्थः । पदार्थः । व्यङ्ग्यं आकाभिनयः । आदिपदाद्दृष्टा अपि ग्राह्याः । तत्र पदं द्विविधं । सुबन्तं तिङन्तं च तदेकदेशो

नामनधातुरूपप्रकृतिः सुप्तिङुपसर्गरूपश्चेति तेषां सर्वेषा व्यञ्जकत्व-मित्यर्थः । तत्र पदस्य व्यञ्जकत्व यथा निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वीतवेयं तनुः मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्यत्राधमपदेन तस्यान्तिकमेव रन्तुङ्गतासीत्यधमपदेनप्राधान्येन व्यज्यते । अत्र पदैकदेशाना बहुत्वेन निखिलतदुदाहरणे गौरवमिति विभक्तिरूपैकदेशोदाहरणं प्रदृश्यते यथा लिखिन्नास्ते भूमि बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरुदितोच्छूननयनाः । परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेय विसृज कठिने मानमधुना । अत्र तवप्रसादं कर्तुमास्ते लिखन् न तु लिखतीति ॥ आस्ते । नत्वासितः । भूमिं न तु भूमौ । तथा चावस्थानं बुद्धिपूर्वकं नेति प्रसादपर्यन्तमवस्थानमिति तिङ्विभक्त्या व्यज्यत इति । एवं वाक्यादीनामपि सुधीभिरन्विष्य बोध्यमिति । असिद्धेः । व्यञ्जनाया असिद्धेः । तथा च व्यञ्जनायामसिद्धाया कृतं वृत्त्यन्तरेणेति भावः । अथवा असिद्धेः पदैकदेशादीनां व्यञ्जकत्वासिद्धेः । ननु तदेकदेशवर्णवाक्यादीनां शक्तिलक्षणयोरभावाद्विना वृत्त्यन्तरं कथमर्थप्रत्यायकत्वमित्यत आह तदेकदेशेति । पदैकदेशभूतप्रकृतिप्रत्यययोर्वाक्यादीना च तात्पर्यग्राहकत्व मित्यर्थः । न तु तदर्थप्रतिपादकाः । तत्वर्थविशेषप्रतिपादकाः । ननु कारणभेदाल्लक्षणातिरिक्तत्वं भविष्यतीत्यभिप्रायवानाह स्यादेतदिति । नियतः । व्यञ्जनायां सहकारितया नियतः । स्वार्थेरचितेति । परार्थेरचितस्थले तु परज्ञापनीयव्यङ्ग्यार्थस्य तात्पर्यविषयत्वात् चार्थेत्युक्तं । तच्च तत्र तात्पर्याभावेन लक्षणाया अभावे लक्षणाया अभावाद्व्यञ्जनावश्य वाच्या । अन्यथा व्यङ्ग्यस्य चमत्कारित्वं न स्यादिति भावः । व्यङ्ग्यतात्पर्यग्रहस्येति । तथा च स्वार्थेरचितकाव्यादावपि व्यङ्ग्यतात्पर्यग्रहस्य जायमानत्वेन व्यभिचाराभावादिति भावः । ननु संस्कारविशेषपरिपाकवशाच्छैत्यपावनत्वादिकमेव प्रतीयत इत्याह । वासनेति । वासनावि-

शेषः संस्कारविशेषः नियमः शैत्यपावनत्वादिबोधनियमः । सः वासनाविशेषः तथा च तात्पर्यग्रहस्य वासनाविशेषस्य वा लक्ष्ये व्यङ्ग्ये चोभयत्र वक्तुं शक्यत्वात् सामग्रीतौल्यात्किमतिरिक्तव्यञ्जनयेति भावः ।

वस्तुतो व्यञ्जनायां गच्छगच्छसीत्यत्र मागा इत्यत्रास्यास्तात्पर्यमुन्नीयते सम्भाव्यते वा । न तु मागा इति निर्णीयतः इति कृतं वृत्त्यन्तरेण । स्यादेतत् यद्येते एव वृत्ती कथं तर्हि प्रजयतीत्यादौ प्रकर्षबोधः । नहि प्रादेः प्रकर्षादौ शक्तिर्द्योतकत्वात् न च लक्षणा अशक्तत्वात् । उच्यते प्रजयतीत्यत्र प्रकृष्टजयलक्षकः । प्रशब्दस्तु तात्पर्यग्राहकः तत्त्वमेव च द्योतकत्वं । न च जयः शक्य एव प्रकर्षो लक्ष्य इति वाच्यम् जयमात्रं हि शक्यं न तु विशिष्टजयः । तदाहुः शक्यादनेन रूपेण ज्ञाते भवति लक्षणेति । ननु प्रादेरेव प्रकर्षादौ न कथं शक्तिः कल्प्यते इति चेन्न अन्यलभ्यत्वादिति गृहाण । व्यतिसेत्यत्र तु लुसो धातुरेवार्थं प्रत्याययति धातुलोपमजानतस्तत्रार्थप्रत्ययाभावादिति संक्षेपः ।

ननु लक्ष्यार्थबोधे वासनाविशेषस्य नियामकत्वे तात्पर्यग्रहस्य नियामकत्वाभावे गच्छगच्छसीत्यत्र गमने वान्वयानुपपत्तेरभावान्मागा इत्यत्र लक्षणा न स्यादित आह वस्तुत इति । अस्याः । उन्नीयते । तुल्यकोटितया संदिह्यते यदि तत्र तुल्यकोटिकसंशयो नानुभवसिद्धस्तदाह सम्भाव्यत इति । उत्कटकोटिकतया सन्दिह्यत इत्यर्थः । न तु मागा इति । तथा च प्रायो मागा इत्यत्रास्यास्तात्पर्यमिति तात्पर्य-

सम्भावनामात्रं न तु मागा इति निश्चीयते । येन तन्निश्चयार्थं वृत्त्यन्तरं वाच्यमित्यर्थः । एते शक्तिलक्षणे । तर्हि व्यञ्जनाया अस्वीकारे । द्योतकत्वात् अर्थविशेषे तात्पर्यग्राहकत्वात् । ननु जिधातोरेव तात्पर्यग्राहकत्वमस्तु प्रशब्दस्य तु प्रकृष्टजये लक्षणेत्यभिप्रायवानाह न चेति । अशक्तत्वादिति । प्रशब्दस्य क्वचिदपि शक्त्यभावेन तत्र शक्यसम्बन्धरूपलक्षणाऽसम्भवात् । प्रणमतीत्यादौ प्रकृष्टनमस्कारस्य प्रतिष्ठते इत्यादौ च स्थितिविरोधिगमनस्य प्रशब्दलक्ष्यत्वे प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिभङ्गापत्तेश्चेति । तथा च शक्तिलक्षणयोरभावात्प्रजयतीत्यादौ प्रकर्षबोधार्थं प्रादेर्व्यञ्जनारूपं वृत्त्यन्तरमवश्यं वाच्यमिति भावः । जयतिः जिधातुः । ननु तर्हि प्रादेर्द्योतकत्वं न स्यादित्यत आह तत्त्वमिति । तत्त्वमेव तात्पर्यग्राहकत्वमेव । प्रशब्दस्य द्योतकत्वाभावे प्रशब्दं विनापि जयतीत्यतः प्रकर्षबोधः स्यादिति भावः । ननु जिधातोः प्रकृष्टजये शक्तिः प्रकृष्टजयस्यापि जयाभिन्नत्वादिति जिधातोः शक्य एव प्रकर्षः कथं पुनर्जिधातुना लक्ष्यत इत्याह न चेति । जियः जिधातोः । जयमात्रमिति । विशिष्टजयस्य शक्यत्वेऽपि जयत्वं शक्यतावच्छेदकं न तु विशिष्टजयत्वमित्यर्थः । जिधातोर्विशिष्टजयत्वेन रूपेण लक्ष्यत्वे साधकमाह तदाहुरिति । शक्यादिति । तथा च जयत्वेन रूपेण शक्तिः विशिष्टजयत्वेन रूपेण लक्षणेति भावः । यद्वा । विशिष्टजयस्य शुद्धजयातिरिक्तत्वमित्याशयवानाह । जयमात्रमिति । शक्यादिति । प्रकृते विशिष्टजयस्य शुद्धजयभिन्नत्वेन ज्ञाते लक्षणेत्यर्थः । अन्यलभ्यत्वादीति अन्यलभ्यो हि शब्दार्थस्तथा च प्रकर्षस्य लक्षणालभ्यत्वे किमर्थं शक्तिर्वाच्येति । ननु प्रादेः शक्त्यभावे लुप्तधातुस्थले कथमर्थप्रत्यय इत्यत आह व्यतिस इति । अत्राम-धातुर्लुप्तस्तस्य स्मरणाद्धात्वर्थरूपार्थप्रत्यय इति भावः । अत्रायं सङ्क्षेपार्थः प्रजयतीत्यत्र प्रशब्दस्यैव प्रकर्षार्थः धातोश्च जयादिकमर्थस्तयोर्वैशिष्ट्यं संसर्गमर्यादया लभ्यं । अव्ययातिरिक्तनामार्थस्यैव धात्वर्थजयादावन्वयस्याव्युत्पन्नत्वात् । अन्यथा मीमांसकमते न कलञ्जं भक्षयेदित्यादौ कलञ्ज

भक्षणाभावविषयकं कार्यमिति न्यायनये च कलञ्जभक्षणं पापाजनकत्वाभाववदिति वान्वयो न स्यादिति चेन्न । धातुलक्षणयैवोपपत्तेः प्रादेः शक्तिकल्पने मानाभावात् । धातुं विना केवलेन प्रशब्देन प्रकर्षस्य क्वचिदप्यप्रत्ययात् । नचैवं प्रत्ययमात्रस्यत्र शक्तिभङ्गः स्यात् । घटादिप्रकृतिपदानामेव घटकर्मत्वादिबोधकत्वादिति वाच्यम् । घटमानयतीत्यादौ घटकर्मत्वादेः प्रातिपदिकार्थत्वे चैत्रः पचतीत्यादौ पाकानुकूलकृत्यादेर्धात्वर्थतया धात्वर्थनामार्थयोः साक्षादन्वयस्याव्युत्पन्नत्वेन चैत्रादौ कृतिप्रकारकप्रतीत्यनुपपत्तेरिति । एतेन घटादिपदानामेव घटाभावादौ लक्षणयैवोपपत्तेर्नञोऽभावे शक्तिर्न स्यादिति परास्तम् । नामार्थस्य नामार्थेन सह भेदान्वयस्याव्युत्पन्नत्वेन भूतलं न घट इत्यादौ लक्षणया घटादिपदार्थस्य घटाभावस्य भूतलेन सहान्वयो न स्यात् । नञ्पदस्याभावशक्यत्वे तु घटस्य नञर्थेन सह नञर्थस्य भूतलेन सहान्वये बाधकाभावादिति दिक् ।

**स्यादेतत् आख्यातस्य तावद्यत्न एव शक्तिः पचतीत्यस्य पाकं करोतीति विवरणात् । व्यवहारवद्विवरणादपि शक्तिनिर्णयात् तथा च रथो गच्छतीत्यत्र न मुख्यः प्रयोगो रथादीनामचेतनतया गमनानुकूलप्रयत्नशून्यत्वात् । नापि लक्षणा विभक्तौ लक्षणनङ्गीकारात् । अन्यथा व्यत्ययानुशासनवैयर्थ्यात् । अतः सिद्धं वृत्त्यन्तरेणेति चेन्न । व्यत्ययानुशासनबलाद्विभक्त्यर्थे अन्यस्मिन्न लक्षणा न त्वन्यत्रापि ।**

आख्यातस्येति आख्यातस्य यत्नत्वं शक्यतावच्छेदकं तेन यत्नस्यापि व्यापारत्वेन व्यापारशक्तिवादिनां मीमांसकानां मते सामान्यतो यत्ने शक्तिस्वीकारेऽपि न सिद्धसाधनं । एवकारेणात्र व्यापारनिरासः । यत्नस्यैव

शक्यत्वे किं मानमत आह पचतीति । तथा च यत्नार्थककरोतिनाख्यातस्य विवरणादाख्यातस्य यत्ने शक्तिरित्यर्थः । इत्थं च यत्नत्वमाख्यातशक्यतावच्छेदकं यत्नत्वबोधकविवरणत्वादिति प्रयोगः । किं करोतीति यत्नप्रश्ने पचतीत्युत्तरं यत्नार्थकत्वं विना नोपपद्यत इत्यपि बोध्यम् । ननु कृञो न यत्नार्थकत्वम् अनुकूलव्यापारमात्रस्यैव कृञर्थत्वात् । तथा च व्यापारार्थककरोतिनाख्यातस्य विवरणाद्व्यापार एवाख्यातार्थो वाच्यः इतरथा रथो गच्छति जानाति इच्छति यतते द्वेष्टि निद्रातीत्यादौ धात्वर्थानुकूलयत्नाभावे आख्यातप्रयोगो न स्यादिति चेन्न अनुकूलव्यापाररूपक्रियाजन्यत्वस्य पटाङ्कुरयोः सत्त्वेपि कृतिजन्यत्वाजन्यत्वज्ञानदशायां कृताकृतव्यवहारात् । तथा चायमर्थः । क्रियाजन्यत्वस्योभयत्र सत्त्वेपि यदाङ्कुरे ईश्वरकृतिजन्यत्वज्ञानं तदाङ्कुरः कृत इति व्यवहारः यदा न तज्ज्ञानं तदा कृत इति न व्यवहारः । एवं पटोपीति । अथ कृञः कृते शक्यत्वे तृचः कर्तृशक्तौ कर्त्तेत्यत्र कृतिकर्तेति बोधः स्यादिति चेन्न । सविषयकधातुसमभिव्याहृततृचः समवायित्वबोधकत्वादिति । अन्यथा कृतः क्रियामात्रार्थत्वे तृचः समवायित्वार्थत्वे क्रियासमवायी कर्तृपदार्थः स्यात् । व्यवहारवदिति । प्रयोज्यप्रयोजकवृद्धयोरावापोद्वापाभ्यामनुमानेन बालस्य शक्तिग्रहवदित्यर्थः । बाधक विनेति पूरणीय तेन करोतीत्यत्र पाकानुकूलकृत्याश्रयत्वादिना विवरणेपि न क्षतिः कृतित्वस्य जातित्वेन कृतित्वापेक्षया कृत्याश्रयत्वस्य शक्यतावच्छेदकत्वे गौरवात् । विवरणं तु तत्तुल्यार्थकपदान्तरेण तदर्थकथनं । अथ यदि यत्ने शक्तिस्तदा रथो गच्छतीत्यादौ का गतिरित्यत आह तथा चेति । न मुख्यप्रयोग इति रथो गच्छतीत्यत्र गमनानुकूलव्यापारवान् रथ इति बोधस्तत्र व्यापारो नाख्यातशक्त्या बुध्यत इति । ननु मास्तु शक्त्या बोधो व्यापारस्य लक्षणया तु भविष्यतीत्यत आह नापीति अन्यथा विभक्तौ लक्षणास्वीकारे । अन्ययेति । पातालमधितिष्ठतीत्यादौ द्वितीयायाः सप्तम्यर्थे लक्षणयैवोपपत्तौ सप्तम्यर्थे द्वितीयाविधायकाधिशीङ्स्थासाङ्कर्मेति सूत्रं व्यर्थं स्यादित्यर्थः । अतः

शक्तिलक्षणयोरभावात् । वृत्त्यन्तरेण व्यञ्जनारूपवृत्त्यन्तरेण तथा च रथो-गच्छतीत्यादौ गमनानुकूलव्यापारबोधार्थं व्यञ्जनारूपवृत्त्यन्तरं स्वीकार्य-मित्यर्थः न विभक्त्यर्थ इति । विभक्त्यर्थेऽन्यस्मिल्लक्षणा नत्वन्यत्रापीति पाठः विभक्त्यर्थेऽन्यस्मिन् विभक्त्यर्थान्यस्मिन् । अन्यत्रापि अन्यविभक्त्य-र्थेपि । तथा च विभक्तिनिरूपिता लक्षणा भवत्येवेत्यर्थः । कुत्रचिद्विभ-क्त्यर्थेन्यस्मिन् लक्षणेति पाठस्तदाऽन्यस्मिन् अन्यविभक्त्यर्थे अन्यत्रापि विभक्त्यर्थेऽन्यस्मिन्नपि । तथा च विभक्त्यर्थान्यस्मिन्व्यापारे लक्षणेत्यर्थः ।

इह च न विभक्त्यर्थे लक्षणा किन्तु व्यापारे दृश्यते च विभक्त्यर्थेप्यानुशासनिकी लक्षणा यथा कृद्योगे षष्ठ्याः कर्मत्वम् न च कर्मत्वमपि सम्बन्धः स च शक्य एवेति न लक्षणा कर्मत्वत्वप्रकारकबोधस्य तया विना असम्भवात् । तत्प्रकारकबोधो न संभवत्येव किन्तु सम्बन्धत्वप्रकारक इति चेन्न । अनुशासनवैय-र्थ्यात् । द्वितीयाया असाधुत्वज्ञापकमनुशासनमिति चेन्न निष्ठादिवर्जनवैफल्यात् । तत्र द्वितीयाया साधुत्वज्ञा-पकं तदिति चेन्न कृत्ययोगे विकल्पविधानवैयर्थ्यात् अनिषेधेनैव तृतीयोपपत्तेः। पाक्षिकषष्ठ्यर्थं तदिति चेन्न सम्बन्धप्रकारकबोधजनिकायाः शेषवचनादेवसिद्धेः निष्ठादियोगे शेषषष्ठ्याऽसाधुत्वज्ञापकं तदिति चेन्न तद्योगेपि तादृशबहुषु दर्शनात् ।

इह रथो गच्छतीत्यादौ अर्थे विभक्त्यन्तरार्थे विभक्तिनिरूपिता न लक्षणेति नियमो न स्वीक्रियते तदा भवतु विभक्त्यर्थे लक्षणा तत्सूत्रं तु तात्पर्यग्राहकमित्यभिप्रायवानाह दृश्यते चेति । तथा च रथो गच्छतीत्यादौ

लक्षणयैव निर्वाहाद्वृत्त्यन्तरकल्पने मानाभाव इति भावः । कृद्योगे भारतस्य श्रवणमित्यादौ कर्मत्वे कर्तृत्व इत्यपि बोध्यं यथा व्यासस्य कृतिरित्यादौ कर्तृत्वे । तथा च कर्तृकर्मणोः कृतीतिसूत्रं कर्तृत्वे कर्मत्वे च लक्षणायां तात्पर्यग्राहकम् । ननु षष्ठ्याः सम्बन्ध एव शक्यस्तथा च कर्तृत्वकर्मत्वयोरपि सम्बन्धत्वात् तत्र लक्षणेत्यभिप्रायवानाह न चेति भारतस्य श्रवणमित्यादौ कर्मत्वत्वप्रकारकबोध एवापेक्षितः स च विना लक्षणां न सम्भवतीत्याह कर्मत्वत्वेति । तथा लक्षणया तत्प्रकारकः । कर्मत्वत्वप्रकारकः किन्त्विति । सम्बन्धत्वप्रकारकबोधस्तु शक्त्यैवेति भावः । अनुशासनेति । कर्मत्वादेः सम्बन्धत्वे शेषस्यापि सम्बन्धात्मकत्वेन षष्ठीशेष इत्यनेनैव निर्वाहात्कर्तृकर्मणोः कृतीति सूत्रं व्यर्थं स्यादिति । न चैवं कर्मणि द्वितीया न स्यादिति वाच्यम् कर्मत्वत्वप्रकारकबोधे द्वितीयाया विधानात् ॥ द्वितीयाया इति । भारतस्य श्रवणमित्यादौ द्वितीया न साधुरित्यर्थे कर्तृकर्मणोः कृतीति सूत्रं ज्ञापकमित्यर्थः । कृद्योगे षष्ठी तु शेषे षष्ठीत्यनेनैव भविष्यतीति भावः । निष्ठादीति कर्तृकर्मणोः कृतीति सूत्रस्य द्वितीयाया असाधुत्वमात्रज्ञापनार्थत्वे कृद्योगे षष्ठीविधायकाभावान्निष्ठादियोगे तत्प्राप्त्यभावेन न लोकाव्ययनिष्ठेत्यनेन षष्ठीवर्जनवैकल्यं स्यादित्यर्थः । तत् । नलोकाव्ययनिष्ठाखलर्थतृनामित्यनुशासनं कृत्ययोगे इति । नलोकेत्यस्य निषेधार्थत्वे द्वितीयायाः । साधुत्वज्ञापकं तद्वाच्यं । तथा च द्वितीयायाः साधुत्वेनैव कृत्प्रत्ययस्थलेपि तृतीयोपपत्तौ कृत्यानां कर्त्तरिवेत्यनेन विकल्पे विधानं व्यर्थमिति तृतीयोपपत्तेः पाक्षिकषष्ठ्यर्थं तत् । कृत्ययोगे वैकल्पिकषष्ठीविधायकं तत् । कृत्यानां कर्त्तरिवेति सूत्रं । कर्मत्वादेः सम्बन्धत्वेन सम्बन्धत्वप्रकारकधीजनकशेषषष्ठ्यैव निर्वाहे किं षष्ठीविधायकेनेत्याह । सम्बन्धत्वेति सम्बन्धत्वप्रकारकबोधजनिकायाः तादृशधीजनकषष्ठ्याः शेषवचनादेव सिद्धेः । कर्मत्वरूपसम्बन्धवचनादेव सिद्धेः । तत् । विकल्पविधायकं सूत्रं तद्योगेपि ।

निष्ठादियोगेपि ।

किं च यदि विभक्तौ न लक्षणा कथं तर्हि भाविनं घटं जानातीति विषयतायां कर्मत्वशक्त्या द्वितीया विषयतैव द्वितीयार्थः क्रियाजन्यफलशालित्वापेक्षया लघुत्वादिति चेन्न । तर्हि ग्रामं गच्छतीत्यत्र कुतः कर्मत्वप्रतीतिर्लक्षणां विनेति विभावनीयमायुष्मता । आस्तां तत्रापि वृत्त्यन्तरमिति चेन्न क्लृप्तवृत्त्यैवोपपत्तेः ।

कृद्योगे षष्ठीशेष इत्यनेनैव षष्ठीभविष्यतीत्यत आह किं चेति घटमिति । घटविषयकज्ञानवान् इति बोधस्तत्र विषयत्वं द्वितीयार्थ इति विभक्तौ लक्षणाभवत्येवेति । अथ क्रियाजन्यफलशालित्वरूपकर्मत्वापेक्षया लाघवादखण्डविषयतैव द्वितीयार्थोऽस्त्वित्याह विषयतैवेति तर्हि शक्त्या-विषयताया द्वितीयार्थत्वे गमनजन्योत्तरदेशसंयोगरूपकर्मत्वङ्कथं विना लक्षणां बोद्धव्यमिति विचारणीयमायुष्मता । अत्र क्रियाजन्यफलशालित्व कर्मत्व वहुस्थने दुष्टमित्यत आह विभावनीयमिति तत्रापि विषयत्वेऽपि । वृत्त्यन्तरं व्यञ्जनारूपवृत्त्यन्तरं तथा च भाविनघटं जानातीत्यादौ विषयत्वं व्यञ्जनयैव बोद्धव्यमिति भावः । क्लृप्तवृत्त्यैव लक्षणारूपवृत्त्यैव ॥

मीमांसकास्तु अनुकूलव्यापारमात्रमाख्यातार्थः । रथो गच्छतीत्यादौ मुख्य प्रयोगस्तिङ इत्याहुस्तन्न यत्नत्वस्य जातित्वेन तस्यैव शक्तावच्छेदकत्वात् कथं तर्हि पाकानुकूलता यत्नस्य भासत इति चेत् संसर्ग-विधयेत्यवेहि । कथं तर्हि जानातीच्छति यतते करो-तीत्यादयः प्रयोगाः । न हि ज्ञानाद्यनुकूलो यत्नोऽस्ति प्रतीयते वेति चेद् आश्रयतालक्षकत्वादाख्यातस्येति गृहाण ।

रथेन गच्छतीत्यादिसाधारण्यायानुकूलव्यापारे शक्तिरित्याशयवतां मीमांसकानां मतमाह मीमांसकास्त्विति यद्वा । नन्वाख्यातस्य कृधातोश्च न यत्नार्थकत्वं पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य चाप्रत्ययात् । प्रकृतिप्रत्ययोस्तुल्यतयान्वयायोगात् ॥ पौनरुक्त्यापत्तेश्चेत्यनुकूलव्यापार एवार्थोऽस्त्वित्यभिप्रायवतां मीमांसकाना मतमाह मीमांसकास्त्विति । मुख्यप्रयोगः शक्त्या प्रयोगः । यत्नत्वस्य जातित्वेन लाघवात्तद्विशिष्ट एव शक्तिरित्यभिप्रायवानाह यत्नत्वस्येति । तस्यैव यत्नत्वस्यैव । तथा चैत्रो द्वौ बहव इत्यादौ प्रकृतिप्रत्ययोरेकार्थत्ववद्यतते करोतीत्यत्राप्येकार्थत्वात्तत्र लक्षणेति भावः । इदमुपलक्षणं । रथो गच्छतीत्यादौ रथनोदनादिमति निश्चले गमनानुकूलव्यापारस्य सत्त्वेन गच्छतीति प्रयोगः स्यादित्यपि बोध्यम् । यदि च व्यापारत्वमखण्डोपाधिः । गमनविशिष्ट एवात्र व्यापारः प्रतीयत इति सूक्ष्ममीक्ष्यते तदा जानातीच्छति यतते द्वेष्टि विद्यते निद्रातीत्यादौ ज्ञानाद्याश्रयत्वमात्रस्य प्रतीयमानत्वेन धात्वर्थानुकूलकृतिव्यापारयोश्चाप्रतीयमानत्वेन चाश्रयत्वे लक्षणावश्यकीति । न च ज्ञानाद्यनुकूलव्यापारस्यात्ममनोयोगरूपस्य सत्त्वान्न लक्षणेति वाच्यम् विद्यत इत्यादौ विद्यमानत्व सत्ता सा चात्र विद्यमानकालसम्बन्धरूपा । न तदनुकूलो व्यापारः गुणादावभावात् एव निद्रातीत्यत्रापि मिद्धानाडीमनःसंयोग एव निद्रा तदनुकूलासाधारणो व्यापारस्तदानीमात्मनि नास्ति अदृष्टं च साधारणमिति । न च मनो निद्रातीतिप्रत्ययः स्यात् मिद्धानाडीसंयोगस्य मनस्यपि सत्त्वादिति वाच्यम् परम्परासम्बन्धस्य निद्रात्वात् सचात्मन्येवास्तीति एवं विजातीयशरीरसंयोगोऽपि निद्राया प्रयोजकः सोप्यात्मन्येवेति । न च तत्र लक्षणास्वीकारे तुल्यमिति वाच्यम् व्यापारत्वस्याखण्डोपाधित्वकल्पने गौरवात् । धात्वर्थनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नतया रथो गच्छतीत्यादावाख्यातलक्षणां विना रथगमनयोरन्वयाभावाच्च । ननु पाकानुकूलत्वां-

ऽशान्वयभावात्कथं तद्भासत इत्याह । कथमिति तर्हि आख्यात
वाच्यत्वे । संसर्गेति । इदमावयोः समानमिति भावः । अथ ज्ञान
ानुकूलयत्नस्य बाधात्तदनुकूलात्ममनोयोगरूपव्यापारस्यात्मनि सत्त्वात्त
त्रैव शक्तिरस्त्वनामिति शङ्कते । कथमिति । आश्रयतेति । जानातीत्या
ज्ञानानुकूलयत्नस्य बाधादाख्यातस्याश्रयत्वे लक्षणा । आख्यातेन वर्त्तमा
नत्वादिकन्धात्वर्थ एव बोध्यते । सविषयार्थकधातुयोगे वर्त्तमानत्वादी
धात्वर्थ एवान्वयः ॥ धात्वर्थश्चाश्रयत्वे तच्च चैत्रे । तथा च चैत्रो घ
जानातीत्यत्र घटविषयकवर्त्तमानज्ञानाश्रयश्चैत्र इति बोधः । एतेनाख्या
तस्य न यत्ने न वा व्यापारे शक्तिः किं तु भावनापरपर्यायोत्पादनायां
तथा च चेतनाचेतनयोः साधारण्यात्सर्वत्राख्यातार्थे धात्वर्थोत्पाद
नेति । तेन पचति रथो गच्छतीत्यादौ सर्वत्र मुख्य एव प्रयोगः पचती
त्यादौ पाकमुत्पादयतीति विवरणात् । रथो गच्छति गमनमुत्पादयति
जानातीत्यत्र ज्ञानमुत्पादयति यतते यत्नमुत्पादयतीत्यर्थात् ॥ कृञर्थश्च
उत्पादकत्वमेव । एवं पचति पाकमुत्पादयतीत्युत्पादकतार्थककरोतिना सर्व
स्याख्यातविवरणात्किं करोतीति सामान्येनोत्पादनाप्रश्ने पचति पाकमु
त्पादयतीत्युत्पादनाविशेषेणोत्तरमप्युत एव सङ्गच्छते । नचोत्पत्तेरुत्पत्त्य
भावाच्चैत्र उत्पादयतीत्यत्र का गतिरिति वाच्यम् तत्रोत्पत्त्याश्रयत्वबोधक
त्वात् ॥ उत्पादनार्थधातूत्तरवर्त्तिन आख्यातस्योत्पादनाश्रयार्थः । अनन्य
लभ्यत्वात् । न च वह्निः पचतीति प्रयोगापत्तिरिति वाच्यम् । पाकादिध
त्वर्थेनाक्षिप्तलभ्ययत्नस्याभावादिति रत्नकोशकारमतमप्यपास्तम् । चैत्रः पच
तीत्यादौ यत्नस्यावश्यकतया प्रतीतेर्यत्न एवार्थोऽस्तु । यत्नत्वस्य जातित्वे
नस्यैव शक्यतावच्छेदकत्वं । लाघवाच्चोत्पादकत्वस्योपाधितया गौरवात्
इन्द्रियादीनामपि ज्ञानाद्युत्पादकत्वेन तेषामपि जानातीत्यादिप्रयोगापत्तेः
चैत्रः पचतीत्यादावाक्षेपादिना वर्त्तमानयत्नस्यालाभाच्च । अस्मन्मते यत्न
स्याख्यातार्थत्वे पचति पक्ष्यत्यपाक्षीदित्यत्र वर्त्तमानानागतातीतयत्न
प्रत्ययादिति संक्षेपः ।

चिन्तामणिकृतस्तु जानातीत्यादौ धात्वर्थ एव चैत्रादौ साक्षादन्वेति आख्यातप्रतिपाद्यश्च कालः संख्या वा न तु यत्नोऽपि अयोग्यत्वादित्याहुस्तच्चिन्त्यम् । नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पत्तेः अन्यथा ओदनः पचतीत्यत्रौदनपाकयोः कर्मतासंसर्गेणान्वयः स्यात् ।

अथ चैत्रो घटं जानातीत्यादौ धात्वर्थप्रकारकबोधे पदजन्यपदार्थोपस्थितित्वेनैव हेतुत्वं न तु विभक्त्यर्थोपस्थितित्वेन तथा च ज्ञानस्य साक्षादेव चैत्रेऽन्वय इति मणिकारमतमाह चिन्तामणिकृतस्त्विति । धात्वर्थ एवेति । एवकारेण संख्याव्यवच्छेदः । भावनाविशेष्ये संख्यान्वयाच्चैत्रस्य भावनाविशेष्यत्वाभावान्न चैत्रे संख्यान्वय इत्यर्थः । तर्हि आख्यातप्रतिपाद्यं किमत आहाख्यातेति काल इति । कालो वर्त्तमानत्वादिः संख्या चैकत्वादिस्तच्च वर्त्तमानत्वं धात्वर्थ एवान्वेतीत्यर्थः । अयोग्यत्वादिति । ज्ञानाद्यनुकूलयत्नस्यायोग्यत्वादित्यर्थः । तण्डुलं पचतीत्यादौ पाके कर्मत्वं प्रकारः कर्मत्वे तण्डुल इति परम्परासम्बन्धेन पाके तण्डुलस्यान्वयः पाकस्य कृतौ कृतेश्चैत्रे इति साक्षादित्युक्तं । स्तोकं पचतीत्यादावभेदेनान्वयाद्भेदेनेत्युक्तं । अन्यथा साक्षाद्धात्वर्थनामार्थयोरन्वयस्याव्युत्पन्नत्वाभावे ओदन इति । कर्मतासंसर्गेणौदनप्रकारकपाकविशेष्यकान्वयःस्यादित्यर्थः । इदमुपलक्षणं चैत्रः पच्यते तण्डुल इत्यत्र कर्त्तृतासंसर्गेण चैत्रप्रकारकपाकविशेष्यकबोधः स्यादित्यपि बोध्यम् ।

वस्तुतो जानातीत्यादावाख्यातार्थानवभासे आख्यातार्थसंख्यान्वयो न स्यात्तस्या आख्यातार्थविशेष्यगामित्वनियमात् । विभक्त्यर्थाविशेषणीभूतो ना-

मार्थ आख्यातार्थविशेष्यः तेन चैत्र ओदनं पचतीत्यत्र तथाविधश्चैत्र आख्यातार्थविशेष्यो नत्वोदनः। द्वितीयार्थविशेषणत्वात् पच्यत इत्यत्र कर्म न कर्त्ता तृतीयार्थावरुद्धत्वात् स्थीयत इत्यत्र स्थित्यनुकूला कृतिरिति बोधात् आख्यातार्थे कस्यापि न विशेष्यत्वमिति संख्यानन्वितैव अत एवात्रौत्सर्गिकमेकवचनमेवेत्यूचुः। धात्वर्थविशेष्यकोऽत्रान्वयबोधः। नचैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः असाधुत्वादित्यपि कश्चित्। स्यादेतत् आख्यातार्थः कालः कुत्रार्थेऽन्वेतीति चेत् एकपदोपात्तत्वप्रत्यासत्त्या कृतावित्यवेहि धात्वर्थ इत्यपरे कथमन्यथा जानातीत्यादौ ज्ञाने वर्तमानत्वादि प्रतीयत इति।

ननु विशेष्यतासम्बन्धेनाभेदातिरिक्तसंसर्गकप्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन निपातकृत्तद्धितान्यतरजन्योपस्थितेर्हेतुत्वकल्पनयैवोदनः पचतीत्यादिवारणेऽपि जानातीत्यादौ धात्वर्थप्रकारकबोधे किं बाधकमत आह वस्तुत इति। तस्याः सङ्ख्यायाः। आख्यातार्थेति। अत्र चाख्यातार्थसंख्यान्वयबोधत्वावच्छिन्नं प्रति विभक्त्यर्थाविशेषणीभूतनामार्थोपस्थितेः कारणत्वमित्यर्थः। तेन जयेतेत्यादौ कृतिसाध्यत्वरूपाख्यातार्थविशेष्ये यागादौ संख्यानन्वयः। यागादेर्नामार्थत्वाभावात्। नन्वाख्यातार्थविशेष्य किमित्यत आह विभक्त्यर्थेति। तण्डुलं पचतीत्यादौ कर्मत्वविशेषणत्वेनोपस्थिते तण्डुले भावनाविशेष्यत्व स्यादतो भूतान्तमुक्तं नामार्थ इति। विशेष्यतासम्बन्धेन समवायादिसंसर्गकाख्यातार्थभावनाप्रकारकशाब्दबोधत्वावच्छिन्नं प्रतीतराविशेषणीभूतप्रथमान्तना-

जन्योपस्थितिः कारणं । चन्द्र इव मुखमस्तीत्यादौ प्रथमान्तनामजन्योप
स्थिते चन्द्रे तादृशशाब्दबोधः स्यादत उक्तमितराविशेषणीभूतेति ।
न्द्रस्येवार्थविशेषणत्वेनेतराविशेषणीभूतत्वेनोपस्थित्यभावाच्च दोषः ।
द्वा आत्मनं जानातीत्यत्र द्वितीयार्थविशेषणभूतात्मनेन विशेष्यतासम्ब-
धेन भावनाप्रकारकशाब्दबोधो न स्यादितीतरविशेषणत्वेन तात्पर्या-
वषयत्वार्थकमुक्तम् । एवं च तण्डुलं पचतीत्यत्र तण्डुले तादृशभावना-
कारकान्वयबोधवारणाय नामार्थ इति प्रथमान्तनामार्थपरमिति । उदा-
रणेनाख्यातार्थविशेष्यत्वं दृढयति । तेनेति । तेन निरुक्तनामार्थस्याख्या-
ार्थविशेष्यत्वनिर्वचनेन । तथाविधः विभक्त्यर्थाविशेषणीभूतनामार्थः
वभक्त्यर्थाविशेषणीभूतस्येत्यस्य कृत्यमाह न त्विति । न त्वोदनरूपोर्थ
ाख्यातार्थविशेष्य इत्यर्थः । चैत्र ओदनं पचतीत्यत्र द्वितीयार्थः कर्मत्वं
र्त्तिरूपं तच्च पाके विशेषणतया ओदनं कर्मत्वविशेषणतया चेति
था चैत्रोदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोध इत्यभिप्रायवा-
ाह द्वितीयार्थ इति । प्राचीनमते चैत्रेण पच्यते तण्डुल इत्यत्र तृतीयार्थो
त्तिः सा कृतौ प्रकारः कृतिर्विषयतासम्बन्धेन तण्डुले तथा च चैत्रवृत्ति-
ाकानुकूलकृतिविषयतण्डुल इत्यर्थः । नव्यमते यथा तण्डुलं पचतीत्यत्र
विक्लित्तिरूपफलप्रकारको बोधस्तथा पच्यते तण्डुल इत्यत्रापि फलप्रकारक-
ाधस्यानुभवसिद्धत्वात्फलमात्मने पदार्थः । तथाच चैत्रेण पच्यते तण्डुल
त्यत्र तृतीयार्थः कृतिः सा जन्यत्वसम्बन्धेन पाके स च पाको जन्यत्व-
म्बन्धेन फले चैत्रस्तृतीयार्थे इति । एवं च चैत्रीयकृतिजन्यो यः
ाकस्तज्जन्यफलशाली तण्डुल इति बोधस्तत्र मतद्वयेपि न चैत्रो भाव-
ाविशेष्यः किं तु तण्डुल इत्यभिसन्धायाह पच्यत इति कर्मेति कर्म
र्मीभूतस्तण्डुलः । आख्यातर्थविशेष्य इत्यर्थः । न कर्त्ता न चैत्रः त्व-
द्वुत्वात् । विशेषणत्वात् । स्थीयत इत्यत्र स्थित्यनुकूलकृतिरिति बोध-
तत्र विभक्त्यर्थाविशेषणीभूतनामार्थाभावात्संख्यानन्वितैवेत्याह स्थीयत

इति अत्र स्थित्यनुकूलाकृतिरित्याख्यातार्थेन कस्यापि विशेष्यत्वमिति पाठः कुत्रचित्त स्थित्यनुकूलाकृतिरिति न कस्याप्याख्यातार्थे इति पाठः । उभयत्र कृतिरित्यस्याख्यातार्थेऽन्वयः । संख्यानन्वये कथमेकवचनमित्यत आहात एवेति । अत एव संख्याया अनन्वयादेव प्रथमोपस्थितत्वादेकवचनमेव-माश्रितमिति भावः । अथ गगने न स्थीयत इत्यात्र गगनवृत्तिस्थित्यनुकूलाकृतः कर्त्तृबाधात् धात्वर्थविशेष्यकत्वात्सर्वत्र भावप्रत्ययस्थले चैत्रेण सुप्तमिति गगने न स्थीयत इत्यादौ चैत्रवृत्तिः स्वापो वर्त्तमानो गगनवृत्तिः स्थितिर्वर्तमानेति धात्वर्थविशेष्यक एव बोधः स्वीक्रियत इत्यभिप्रायवतां नव्यानां मतमाह धात्वर्थविशेष्यक इति । अत्र गगने न स्थीयत इत्यादौ । नव्यं धात्वर्थविशेष्यकबोधस्वीकारे द्वित्वादीति । यथा विशेष्यस्य चैत्रादेर्द्वित्वादिविवक्षायां गच्छत इति द्विवचनं तथा स्थितेर्द्वित्व विवक्षया स्थित्युत्तरं भावप्रत्ययोत्तरमाख्यातस्यापि द्विवचनं स्यादित्यर्थः । वर्त्तमानत्वादिः । एकपदोपात्तत्वप्रत्यासत्त्या स्वोपस्थापकाख्यातोपस्थाप्यत्वमस्त्वन्येन । न च संख्याया अप्येकपदोपात्तत्वप्रत्यासत्त्या कृतावेवान्वयोऽस्त्विति वाच्यम् संख्यायाः कृतिविशेष्यान्वयित्वस्य व्युत्पत्तिसिद्धत्वात् । चैत्रो घटं जानातीत्यादौ वर्त्तमानज्ञानाश्रयश्चैत्र इति बोधस्तत्र वर्त्तमानत्वस्य धात्वर्थे ज्ञानेऽन्वयात् सर्वत्र धात्वर्थे एव कालान्वयोऽस्तु इति कस्यचिन्मतमाह धात्वर्थ इति ।

स्यादेतत् । भविष्यता अतीतत्वे चाख्यातविशेषवाच्ये भविष्यत्त्वं च विद्यमानप्रागभावप्रतियोगित्वं विद्यमानध्वंसप्रतियोगित्वमतीतत्वमिति पचति चैत्रे भाविकृतिप्रागभावमादाय पक्ष्यति आद्यकृतिध्वंसमादायापाक्षीदिति स्यात् । न स्यात् आद्यकृतिप्रागभावस्यैव भविष्यत्प्रत्ययेन चरमकृतिध्वंसस्यैवातीतप्रत्ययेनाभिधानात् । अथौदनं पचतीत्य-

**ओदननिष्ठविक्लित्तिजनकव्यापारविशेषकर्तृत्वं प्रतीयते तत्र विक्लित्तिस्तदनुकूलव्यापारश्च कस्यार्थः । उच्यते विक्लित्तिः फलम् तद्धि द्वितीयाया अर्थः तदनुकूलो विलक्षणव्यापारो धात्वर्थः अनुकूलता च संसर्गः ।**

ननु यदि वर्त्तमानत्वस्य कृतावेवान्वयस्तदा भविष्यत्वातीतत्वयोः कालविशेषयोर्भाविकृतिप्रागभावमादायाद्यकृतिध्वंसमादाय च प्रारब्धपाकचैत्रस्थलेऽपि सत्त्वेन पचति चैत्रोऽपि भाविकृतिप्रागभावमादायभविष्यत्कृतिमान् पक्ष्यतीति आद्यकृतिध्वंसमादायातीतकृतिगोचरोऽपाक्षीदिति धीः स्यादित्याह स्यादेतदित्यादिना । समाधत्ते न स्यादाद्यकृतीत्यादिना । क्वचित्स्यादिति चेन्न इत्यपि पाठः । ओदननिष्ठेति ओदननिष्ठा या विक्लित्तिरवयवशैथिल्यं तज्जनकव्यापारस्तदनुकूलविलक्षणक्रियारूपव्यापारविशेषः कर्तृत्वं तदनुकूलकृतिमत्त्वं तदनुकूलव्यापारो विक्लित्त्यनुकूलो व्यापारः तद्धि फलं हि । तदनुकूलः फलानुकूलः । तथा सत्योदननिष्ठविक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोध इति ।

**ननु कर्मत्वं द्वितीयाया वाच्यं तच्च क्रियाजन्यफलशालित्वं न तु फलमात्रमिति चेन्न क्रियाया धातुवाच्यत्वात् । जन्यत्वाश्रयत्वयोश्च संसर्गमर्यादया लाभात् फलमात्र एव शक्तिकल्पनाद् अनन्यलभ्यो हि शब्दार्थः ।**

अथ फलं द्वितीयार्थ इत्यत्र शङ्कते नन्विति । शालित्वमाश्रयत्वं शक्तिकल्पनाद् द्वितीयायाः शक्तिकल्पनात् । ननु क्रियाया धात्वर्थत्वे जन्यत्वाश्रयत्वयोश्च संसर्गत्वे कथं क्रियाजन्यफलशालित्वं कर्मत्वमिति प्राचीनप्रवाद इत्यत आहानन्यलभ्य इति । तथा च धात्वर्थमर्यादया लभ्यस्य संसर्गमर्यादयालभ्यस्य च न द्वितीयापदार्थत्वं प्राचीनप्रवादस्तु निर्युक्तिकत्वाच्च श्रद्धेय इति ।

ननु फलमपि धातुलभ्यमेव फलानुकूलो व्यापारो हि धात्वर्थ इति चेन्न फलानुकूलत्वोपलक्षितो विलक्षणव्यापारो हि धात्वर्थो न तु फलानुकूलत्वमपि गौरवात् । नन्वेवं त्यजिगम्योः पर्यायता स्यात् तथा हि संयोगानुकूलं कर्म गमेरर्थः विभागानुकूलं कर्म त्यजेरर्थः तत्र यदि फलानुकूलत्वमुपलक्षणं तदा कर्ममात्रं शक्यं तत्र वाच्यं तथा च कुतो न पर्यायता । आस्तां पर्यायता को दोष इति चेन्न ग्रामं गच्छतीति वक्तव्ये ग्रामं त्यजतीति प्रतीत्यापत्तेः ।

अथ क्रियाया धात्वर्थत्वे फलमपि धात्वर्थ एव भविष्यतीत्यत आह नन्विति । तत्कथमित्यत आह फलेति । ननु क्रियाजन्यफलशालित्वं कर्मत्वं । तत्र क्रिया फलविशेषणं । यदि च फलानुकूला क्रिया धात्वर्थस्तत्र फलं क्रियायां विशेषणं तथा च फलप्रकारकक्रियाविशेष्यकक्रियाशक्तिग्रहे कथं क्रियाप्रकारकफलविशेष्यककर्मत्वग्रहः । न हि घटपदस्य घटत्वप्रकारकघटविशेष्यकशक्तिग्रहे कदापि घटप्रकारकघटत्वविशेष्यकशाब्दबोध इति फलस्य धात्वर्थविशेषणत्वे यद्यपि समाधातुं शक्यं तथापि लाघवमनुसृत्य तस्योपलक्षणत्वेन समाधत्ते फलानुकूलत्वमिति । वस्तुगत्या फलानुकूल्यं क्रियायामपेक्षित न तु फलानुकूलत्वं शक्यतावच्छेदकमिति भावः ॥ एवं फलानुकूलत्वस्योपलक्षणत्वेन संयोगानुकूलत्वविभागानुकूलत्वयोः सम्बन्धमात्रत्व फलविशेषावच्छिन्नव्यापारस्य धात्वर्थत्वाभावे त्यजिगम्योः कर्ममात्रमर्थो वाच्यः तथा च यथा घटकलशपदयोरेकार्थत्वेन पर्यायत्वं तथा त्यागगमनपदयोः शक्याविशेषात्पर्यायत्वं स्यादिति भावः । तत्र उभयत्र । ननु फलानुकूलव्यापारस्य

धात्वर्थत्वे गम्यते ग्राम इत्यत्रै संयोगादिरूपतत्तत्फललाभः कथं स्यादात्मनेपदस्य फलसामान्यबोधकत्वात् । अथ यथेष्टसाधनत्ववाचकालिङ्घेः सामान्यत इष्टसाधनत्वबोधेपि स्वर्गादिपदसमभिव्याहारात्स्वर्गादिसाधनत्वं प्रतीयते संयोगानुकूल क्रियावाचकधातुसमभिव्याहृतात्मनेपदादिना संयोगरूपं फलं बोध्यते सर्वत्रावच्छेदकीभूत यत्र यत्फलं तत्र तदेव फलमात्मनेपदादिना बोध्यते । तादृशधातुसमभिव्याहारस्य तथैव कार्यकारणभावकल्पनादिति चेत्तर्हि प्रकृतेपि दीयतां दृष्टिः ॥

मैवं गच्छतीत्यादिसमभिव्याहृतद्वितीयायाः संयोगरूपफलबोधकत्वव्युत्पत्तेः । त्यजतीत्यादिसमभिव्याहृतद्वितीयायाश्च विभागरूपफलबोधकत्वव्युत्पत्तेरेव यथोक्तातिप्रसङ्गनिरासात् । न्यायभास्करकृतस्तु फलमवच्छेदकमेव द्वितीयार्थस्तदाश्रयता नचैवम्भूमौ पततीत्यत्र भूमिपदाद्द्वितीयापत्तिः । स्वसमभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयताबोधकत्वव्युत्पत्तेः । अत एव धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति लक्षणं ध्रुवं न हि क्रियाजन्यफलाश्रयत्वं तत् । वृक्षाद्भूमौ पततीत्यत्र वृक्षभूम्योः कर्मजन्यविभागसंयोगाश्रयतया कर्मत्वापत्तेः । ननु तथाप्यधः संयोगानुकूलव्यापारस्य पतत्यर्थतया कर्मत्वं भूमेर्दुरत्यजमिति चेन्न पतत्यर्थे फलस्यावच्छेदकत्वानङ्गीकारात्

गच्छतीत्यादिसमभिव्याहृतद्वितीयायाः संयोगरूपफलबोधकत्वेन त्यजतीत्यादिसमभिव्याहृतद्वितीयाया विभागरूपफलविशेषबोधकत्वेनेत्यभिप्रायवान् समाधत्ते मैवमित्यादिना । उत्तरदेशसंयोगरूपफलबोधत्वा

वच्छिन्न प्रति गच्छतीति समभिव्याहृतद्वितीयाया ज्ञानत्वेन कारणत्व । तथा चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मत्वीभूतसंयोगानुकूलव्यापारानुकूल यत्नवांश्चैत्र इति बोधः । एवं ग्रामं त्यजतीत्यत्र ग्रामकर्मत्वीभूतविभागानुकूलक्रियानुकूलयत्नवानिति बोध इति । अयफलावच्छिन्नो व्यापारो धात्वर्थः । तत्र फलमवच्छेदकं । आश्रयत्व द्वितीयार्थस्तथा च ग्राम गच्छति त्यजतीत्यादौ ग्रामनिष्ठोत्तरदेशसंयोगपूर्वदेशविभागानुकूलक्रियानुकूलयत्नवांश्चैत्र इति बोधः । तत्संयोगावच्छिन्नक्रियायाः गम्यर्थतया विभागावच्छिन्नक्रियायास्त्यजत्यर्थतया त्यजिगम्योर्न पर्यायतापत्तिरित्यभिप्रायवता मतमाह न्यायभास्करकृत इति। ननु फलाश्रयत्वस्य द्वितीयार्थत्वेऽधोदेशसंयोगाश्रयत्वरूपफलाश्रयत्वस्य भूमावपि सत्त्वेन भूमौ पर्णं पततीत्यादौ भूमिपदोत्तरं द्वितीया स्यादित्याह । न चैवमति । एवं फलाश्रयत्वस्य द्वितीयार्थत्वविवक्षणे स्वसमभिव्याहृतेति स्वं सकर्मकधातुः । तथा चात्र पतधातोरकर्मकत्वेनाधोदेशसंयोगाश्रयत्वस्य धात्वर्थतावच्छेदकफलाश्रयत्वाभावान्न तस्य द्वितीयार्थत्वं सकर्मकधातुसमभिव्याहाराभावात् । नचाश्रयत्वस्य क्रियाजन्यत्वाभावेन कथं क्रियाजन्यफलशालित्वं कर्मत्वमिति लक्षणसङ्गतिरित्यत आह अत एवेति । अत एव क्रियाजन्यफलाश्रयत्वस्य दोषदुष्टत्वादेव । कर्मजन्येति । वृक्षाद्विभागः । भूमौ संयोगः तदाश्रयत्वस्योभ त्र सत्त्वादित्यर्थ, । यद्वा द्वितीयार्थस्याश्रयतामात्रत्वे सप्तम्यर्थाभेदापत्त्या सप्तमीस्थाने द्वितीया स्यादिति शङ्कते न चैवमिति । एवं द्वितीयार्थस्य सप्तम्यर्थाभिन्नत्वे । स्वसमभिव्याहृतेति तथा च सकर्मकधातुसमभिव्याहारे धात्वर्थतावच्छेदकफलाश्रयत्वबोधः । अन्यत्र सप्तमीसमभीव्याहारे चाधिकरणत्वबोध इति न दोषः । तत्रापि फलस्यावच्छेदकत्वत्रादिनोऽपि । कर्मत्वमिति । तादृशव्यापारावच्छेदकीभूताधःसंयोगस्य भूमावपि सत्त्वाद्भूमौ कर्मत्वं दुस्त्याज्यमित्यर्थः । पतत्यर्थ इति । पतत्यर्थफलस्यावच्छेदकत्वाभावे व्यापारमात्रं पतधात्वर्थ इति न भूमौ कर्मत्वं तादृशफलाश्रयत्वाभावस्य भूमौ सत्त्वा-

दिति तथा च गुरुत्वासमवायि कारणप्रयोज्याधःसंयोगरूपफलजनकं कर्म पतधात्वर्थस्तेन फलस्योपलक्षणत्वादवच्छेदकत्वाभावे तादृशफलवत्वस्य भूमौ सत्त्वेपि न तत्र कर्मत्वमिति ॥ अत एव धात्वर्थनावच्छेदकफलशालित्वं कर्मत्वमित्यत्र पतत्यर्थे फलपदं धात्वर्थतानवच्छेदकफलपरमिति शब्दमणावुक्तमुपाध्यायैः । इत्यञ्च पतिस्थलेऽप्येव व्युत्पत्तिरिति ध्येयम् ।

**तद्धात्वर्थानधिकरणत्वे सतीति विशेषणाच्च न चैत्रस्य धात्वर्थतावच्छेदकफलग्रामसंयोगाश्रयत्वेपि कर्मत्वमिति स्वीकुर्वन्तीति संक्षेपः ।**

अथ चैत्रो ग्रामं गच्छतीत्यत्र चैत्रस्य कर्मत्वापत्तिः । धात्वर्थतावच्छेदकीभूतगमनानुकूलसंयोगस्य चैत्रेऽपि सत्त्वादित्यत आह तद्धात्वर्थेति तथा च समभिव्याहृतधात्वर्थानधिकरणत्वे सति धात्वर्थताच्छेदकफलाश्रयत्वमित्यर्थः । चैत्रस्य गमनानुकूलक्रियारूपधात्वर्थाधिकरणत्वाद्विशिष्टाभावस्य सत्त्वादिति धात्वर्थानधिकरणस्यैव कर्त्तुरीप्सततत्वरूपकर्मत्वमिति भावः । एतन्मते फलावच्छिन्नव्यापारस्य धात्वर्थत्वे तदैकदेशफलेन सह द्वितीयार्थत्वयो नोपपन्न इत्यस्वरसो बोध्यः । अत्रायं संक्षेपार्थः । यद्याख्यातस्य कृतौ शक्तिस्तदाख्यातेन कर्तृकर्मणोरनभिधानात् पचति तण्डुलमित्यत्र कर्त्तरि तृतीया स्यात् । पच्यते तण्डुल इत्यात्र कर्मणि द्वितीया स्यात् । कर्त्तरि कर्मणि च तृतीयाद्वितीययोरनभिहिताधिकारीयत्वात् अनभिहिते कर्मणि द्वितीयेत्यादिसूत्रदर्शनादिति आख्यातेन कर्तृसंख्यानभिहिता तदा कर्त्तरि तृतीया । यदा त्वभिहिता तदा प्रथमा । यद्याख्यातेन कर्मसंख्या नाभिहिता तदा कर्मणि द्वितीया अभिहिता प्रथमेति । तथा च लाघवात्कृतावेव शक्तिरिति संक्षेपः । अत्रेदं प्रतिभाति । क्त्वाप्रत्ययस्यापि कृतावेवशक्तिः । समानकर्तृकत्वे सति पूर्वकालत्वापेक्षयाऽव्यवहितपूर्वकालत्वापेक्षया च लाघवात् । अत्रानन्तर्य्य

समानकर्तृकत्वं च संसर्गस्तथा च भुक्त्वा व्रजतीत्यादौ भोजनानुकूलकृत्या समानकर्तृकं यद्भोजनानन्तरकालिकं गमनं तदनुकूलकृतिमांश्चैत्र इति बोधः एवं च समानकर्तृकयोः पूर्वकाल इति सूत्रं सूपपन्नं । अथौष्ठपुटविभागरूपस्य मुखव्यादानस्य स्वापोत्तरकालीनतया मुखं व्यादाय स्वपितीति प्रयोगो न स्यादिति चेन्न मुखव्यादानोत्तरमपि यत्किञ्चित्स्वापस्य सत्त्वादिति संक्षेपः ।

तस्य शब्दस्य निराकाङ्क्षादावन्वयाबोधकत्वादाकाङ्क्षादिकं सहकारि तत्र यत्पदं यत्पदेन सह यादृशान्वयानुभवजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा भवति नामपदमुत्तरवर्त्तिविभक्तिपदेनैव सहान्वयबोधकमतस्तस्य समभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा । अत एव घटः कर्मत्वमित्यतो न घटमिति वदन्वयबोध आकाङ्क्षाविरहात् । धातुपदं च आख्यातपदेनैव सहान्वयविशेषबोधकमिति भवति तत्र आख्यातपदसमभिव्याहार आकाङ्क्षा अत एवानयनं कृतिरित्यादावानयतीतिवन्नान्वयबोधः कृतिवाचकाख्यातसमभिव्याहाराभावेन निराकाङ्क्षत्वात् ।

अथ वृत्तिज्ञानैककार्यकारित्वरूपां सङ्गतिं दर्शयति । तस्येति यद्वा निराकाङ्क्षादौ प्रकृतशाब्दबोधान्वयासम्भवात्प्रकृतशाब्दान्वयसिध्यर्थमाकाङ्क्षादिरूपकारणचिन्तनादाकाङ्क्षादावुपोद्घातसङ्गतिं दर्शयति । तस्येति अथ वा शाब्दबोधकारणस्य स्मृतत्वादुपेक्षाया अभावे प्रसङ्गसङ्गतिं दर्शयति । तस्येति । तस्य प्रमाणतया सिद्धस्य निराकाङ्क्षादौ घट

कर्मत्वमानयनं कृतिरित्यादौ । आकाङ्क्षादिकं आकाङ्क्षादिज्ञानं । आदिना योग्यतासत्तिसंग्रहः । तथा च लाघवादत्रैव योग्यतासत्योरपि सङ्गतिः प्रदर्शितेति भावः । शाब्दबोधसहकारीभूताकाङ्क्षाज्ञानविषयीभूताकाङ्क्षा केत्यत आह । यत्पदमिति । यत्पदं पटादिपदं । यत्पदेन सह द्वितीयादिपदेन सह । यादृशान्वयानुभावकं पटप्रकारककर्मत्वादिविशेष्यकान्वयानुभवजनकं । तत्पदस्य पटादिपदस्य । समभिव्याहारः द्वितीयादिपदेन सहानुपूर्वीविशेषः । तादृशान्वयबोधे पटप्रकारककर्मत्वादिविशेष्यकान्वयबोधे । अत्र महावाक्यार्थबोधे नेयमाकाङ्क्षेति हृदयम् । लक्ष्येनलक्षं योजयति भवतीत्यादिना । नामपदं । घटादिपदं । उत्तरवर्तिविभक्तिपदेन नामोत्तरद्वितीयादिविभक्तिपदेन । अन्वयबोधकं घटादिप्रकारककर्मत्वादिविशेष्यकनिरूपितत्वादिसंसर्गकान्वयबोधजनकं । तत्समभिव्याहारः द्वितीयादिविभक्तिपदानुपूर्वीविशेषः । तादृशान्वयबोधे घटादिप्रकारककर्मत्वादिविशेष्यकनिरूपितत्वादिसंसर्गकान्वयबोधे ।

अत एवाकाङ्क्षाया एतादृशत्वनिर्वचनादेव । घटः कर्मत्वमिति, यथा घटमित्याकारकसमभिव्याहारस्य घटप्रकारककर्मत्वविशेष्यकनिरूपितत्वसंसर्गकान्वयबोधजनकत्वं तथा न घटः कर्मत्वमेतादृशसमभिव्याहारस्येत्यर्थः । आकाङ्क्षाविरहाद् कर्मत्ववाचकद्वितीयादिपदसमभिव्याहाररूपाकाङ्क्षाविरहात् । अत्र घटः कर्मत्वमित्यादौ समानविभक्तिकत्वादभेदान्वये आकांक्षायाःसत्त्वेपि आधेयत्वादिघटितभेदसम्बन्धेनाकाङ्क्षाया विरहादिति भावः । एवं च घटप्रकारककर्मत्वविशेष्यकबोधे घटीयपदोत्तरकर्मत्वीयविभक्तित्वं कर्मत्वीयविभक्तिपूर्वकघटीयपदत्वं वाकाङ्क्षेति फलितम् न च घटपटावानयेत्यत्र घटीयपदोत्तरकर्मत्वीयविभक्त्यभावेन घटांशे आकाङ्क्षा न स्यादिति वाच्यम् । तत्र घटपटोत्तरत्वेनानुसन्धीयमानविभक्तित्वस्याकाङ्क्षात्वस्वीकारात् । यद्वा घटांशे आकाङ्क्षाभ्रमेण निर्वा-

...घटपटौ... घटपटौ तत्र प्रकृतान्वयबोधविरोधिपदानुत्तरद्वितीयाविभक्तित... न हि घटपटावित्यत्र प्रकृतान्वयबोधे पटपदं विरोधीति ॥ न ... न हि घटपटावित्यत्र प्रकृतान्वयबोधे पटपदं विरोधीति ॥ ... मात्रे द्वित्वान्वयापत्तिरिति वाच्यम् । घटपरत्वेन गृहीततात्प... ...द्विवचनस्यैव पर्याप्तिसम्बन्धेन घटपटवृत्तिद्वित्वबोधकत्वा... द्वित्वबोधकसामर्थ्याभावाच्च । एवं विशेष्यतासम्बन्धे... ...प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन धात्वर्थोप... ...कारणत्वं बोध्यम् ॥ धातुपदमिति । घटमानयतीत्यादौ विशेष्यता... ...आनयनादिरूपधात्वर्थप्रकारककृतिविशेष्यकशाब्दबोधे आनयना... ...धातूत्तराख्यातत्वं तदुत्तरप्रत्ययत्वं वाकाङ्क्षा । एवं चानयेत्यत्रा... ...कृदर्थकर्त्रैकदेशे कृतावन्वयोपि सूपपन्न इति । अन्वयविशेषबोधः धात्वर्थप्रकारकप्रत्ययार्थविशेष्यकशाब्दबोधजनकं। तत्र धात्वर्थं प्रत्ययार्थवि... ...शाब्दबोधे। एवं विशेष्यतासम्बन्धेनाख्यातार्थभावनाप्रकारकसमवाया... ...शाब्दबोधत्वावच्छिन्नं प्रति नामजन्योपस्थितेर्विषयतासम्बन्धेन ...मिति नीलं घटमानयेत्यादौ विशेषणतया कर्मत्वान्वितस्यापि घटस... ...न्वये न निराकाङ्क्षत्वमित्यनुपदं वक्ष्यते ।

ननु नामपदं द्वितीयादिसमभिव्याहृतमेव कर्मत्वादीनामाश्रयाश्रयीभावेनान्वयबोधकत्वमित्यत्र किं नियामकमिति चेत् । नाम्नः स्वार्थनिष्टकर्मत्वानुभवजनने तदुपस्थापकविभक्तिसहकारित्वमितिगृहाण । हन्तैवं यस्य पुरुषस्य घटः कर्मत्वमित्यादिवाक्यव्युत्पत्तिरभून्न कुतस्ततोऽन्वयबोध इति चेत् तस्मिन्पुरुष एव मानं नास्ति का कथा तस्यान्वयबोधे । तथापि यदि कश्चित्तादृशः स्यात्तस्य किं भविष्यतीति चेत् शाब्दानुभववैधुर्यमेव ।

ननु नामपदं द्वितीयादिसमभिव्याहृतमेवाश्रयाश्रयीभावसम्बन्धेन नामार्थप्रकारकविभक्त्यर्थविशेष्यकान्वयबोधजनकं तदेव द्वितीयापदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा तत्रैव मानं न पश्याम इत्याह नन्विति नाम्न इति। नाम्नो नामार्थनिष्ठकर्मत्वादिविशेष्यकबोधजनने कर्मत्वोपस्थापकविभक्तेः सहकारित्वेन तत्समभिव्याहारस्याकाङ्क्षात्वादित्यर्थः। नचैवं दधिपश्येत्यादौ दधिपदोत्तरद्वितीयाविभक्तेरभावात्कथमर्थावगम इति वाच्यम्। लुप्तद्वितीयाविभक्तेः प्रतिसन्धानात्। अत्रेदं तत्त्वं। कर्मत्वविशेष्यकाधेयतासंसर्गावच्छिन्नघटप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति वृत्त्या घटोपस्थापकनामोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वेन हेतुत्वं। वृत्त्येति पदापादानात् षष्ठीचतुर्थ्योः कर्मत्वशक्तिविरहेऽपि घटस्यानयनं घटाय गच्छतीत्यादौ कर्मत्वान्वयः सूपपन्नः। एतेन तादृशबोधं प्रति घटपदोत्तराम्पदज्ञानत्वेन न हेतुत्व न वा घटार्थकपदोत्तराम्पदज्ञानत्वेन। आद्ये कलशमानयेत्यादौ द्वितीये घटावानयेत्यादौ व्यभिचारात्। नापि घटार्थकपदोत्तरद्वितीयाज्ञानत्वेन घटस्यानयतीत्यादौ व्यभिचारादित्यादि परास्तम्। निगर्वस्तु विशेष्यतासम्बन्धेन विभक्त्यर्थविशेष्यकाधेयतासंसर्गकघटप्रकारकशाब्दत्वावच्छिन्नं प्रति घटोस्थापकपदोत्तरविभक्तिज्ञानत्वेन हेतुत्व तृतीयादिसाधारण्यात्। एवं प्रथमान्तपदोपस्थाकतादात्म्यसम्बन्धेन घटादिविशेष्यकशाब्दबोधत्वावच्छिन्नं प्रति नामोत्तरसुप्जन्योपस्थितिः कारणं नीलो घट इत्यादावभेदान्वयस्यानुभवसिद्धत्वादिति सुधीभिर्विभाव्य बोध्यमिति। तत इति। घटङ्कर्मत्वमित्यादौ व्युत्पन्नस्तस्य घटमित्यादावम् पदस्य कर्मत्वव्युत्पत्त्यभावात्कथं घटमित्यतोऽन्वयबोधस्तस्येत्यर्थः एवं घट आनयनं कृतिरित्यत्रैव व्युत्पन्नस्तस्यानयेत्यादौ व्युत्पत्त्यभावात्कथं ततोऽन्वयबोध इत्यर्थः। यद्वा तत इति घटः कर्मत्वमित्यादिवाक्यात् कर्मत्वोपस्थापकाम्पदसमभिव्याहाराभावाच्च घटप्रकारककर्मत्वविशेष्यकशाब्दबोध इत्यर्थः। तस्मिन् विपरीतव्युत्पन्ने। तादृशः घटकर्मत्वमित्यादौ विपरीतव्युत्पन्नः। न च तस्य घटः कर्मत्वमित्यादित

एव बोध इति वाच्यम्। पुरुषभेदेन भिन्नकारणत्वकल्पने गौरवात् वैधुर्यम पलापः।

**अन्वयव्यतिरेकसिद्धकारणविरहादिति। एतस्याश्चाकाङ्क्षाया ज्ञानं हेतुस्तद्भ्रमेणान्वयबोधात्। अपरा च प्रकृतान्वयबोधसमानाकारस्वजन्यान्वयबोधविरहः प्रकृतान्वयबोधे स्वरूपसतिहेतुराकाङ्क्षा**

ननु कुतस्तत्रापलाप इत्यत आहान्वयव्यतिरेकेति। घटप्रकारककर्मत्वविशिष्यकशाब्दबोधे घटमिति समभिव्याहारस्यैवान्वयव्यतिरेकाभ्यां कारणत्वस्य कॢप्तत्वाद्घटः कर्मत्वमित्यतो नान्वयबोध इत्यर्थः। एवमानयेत्यादावपि बोध्यम्। अत्र पदानि पदार्थोपस्थितिपराणि बोध्यानि। अन्यथा मौनिश्लोकादौ पदाभावेन पदघटिताकाङ्क्षाया अभावात्कथं शाब्दबोधः कथं वा पदाना साक्षादनुभावकाभावान्नासम्भवः अत्रेदम्प्रतिभाति मैत्रस्य तादृशपदोपस्थितिसमभिव्याहाररूपाकाङ्क्षायाः सत्त्वादन्वयबोधे जाते पदान्तरोपस्थितिविरहेण चैत्रस्याप्यन्वयबोधःस्यान्मैत्रस्य तादृशसमभिव्याहाररूपाकाङ्क्षायाःसत्त्वादिति तत्पुरुषीयत्वमवश्यं वाच्यम्-एवं यत्पदोपस्थितिर्यत्पदोपस्थित्यासह यत्पुरुषीययादृशान्वयबोधजनिका तत्पदोपस्थितेस्तत्पदोपस्थितिसमभिव्याहारस्तत्पुरुषीयतादृशन्वयबोधे आकाङ्क्षेति पर्यवसितं। एवं च घटपदोपस्थितिः कर्मत्वोपस्थापकविभक्तिपदज्ञानेन सह घटप्रकारककर्मत्वविशेष्यकान्वयबोधजनिकेति ज्ञानं तत्पुरुषीयशाब्दबोधं प्रति द्वयमेवाकाङ्क्षाधीःकारणमिति विशिष्य वाच्यं तथा च तत्तत्पुरुषीयविभिन्नकार्यकारणभावाद्विपरीतव्युत्पन्नस्य घटः कर्मत्वमित्यादितोऽप्यन्वयबोधे बाधकाभावादिति। अत एवापभ्रंशजनिते कर्मत्वादिविशेष्यकशाब्दबोधे व्यभिचारविरह इति विविच्य बोध्यम्। एतस्याः निरुक्तायाः। ननु तत्र किं मानमत आह तद्भ्रमेणेति। स्वरूपसत्या आकाङ्क्षाया हेतुत्वे यत्राकाङ्क्षाया अभावस्तत्राकाङ्क्षाया भ्रमाच्छाब्द-

भ्रमो न स्यादिति भावः । ननु घटमानयेत्यादितोऽन्वयबोधे जातेपि पुनरन्वयबोधः स्यात् निरुक्ताकाङ्क्षायास्तत्रापि सत्त्वेन निराकाङ्क्षत्वाभावादत आह अपरेति । प्रकृतान्वयबोधस्तात्पर्यविषयीभूतो योन्वयबोधस्तत्समानाकारस्तद्विषयतायाअनतिरिक्तविषयताकस्तादृशो यः स्वजन्यान्वयबोधः आकाङ्क्षाजन्यान्वयबोधस्तस्य यो विरहः स प्रकृतान्वयबोधे स्वरूपसती आकाङ्क्षेत्यर्थः । तथा च गामानयेत्यादौ गोनिष्ठा या प्रकारता तन्निरूपिता कर्मत्वनिष्ठाविशेष्यता कर्मत्वनिष्ठप्रकारतानिरूपिता या आनयननिष्ठाविशेष्यता आनयननिष्ठप्रकारतानिरूपिता या आख्यातनिष्ठाविशेष्यतेत्येवं बोधस्तात्पर्यविषयस्तत्र गोनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताके बोधे जातेपि दण्डकरणकगोकर्मकान्वयबोधे साकाङ्क्षत्व प्रकृतायन्वयसमानाकारकान्वयबोधस्याजायमानत्वादित्यर्थः ।

अतो घटमानयतीति पदमेकदान्वयबोधे जनिते नान्वयबोधान्तरं जनयति स्वजन्यान्वयबोधवैधुर्यविरहात् । एवञ्च गामानयेत्यतोऽन्वयबोधे जाते दण्डेनेत्यन्वयबोधे निराकाङ्क्षता स्यादत उक्तं प्रकृतान्वयबोधसमानाकार इति न च गामानयेत्यन्वयबोधः प्रकृतो येन दण्डेनगामानयेत्यन्वयबोधस्तेनसमानकार इति । योग्यता चैकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वं तेन पयसा सिञ्चतीति योग्यं पयसि सेककरणत्वसंसर्गस्य सत्त्वात् यस्मिंश्च पयसि सेककरणत्वसंसर्गो नास्ति तस्मिन्न योग्यत्वं । आकाशं शब्द इत्यत्र समवायरूपसंसर्गवत्त्वमादायाभेदान्वयबोधेपि योग्यता स्यादत उक्तं प्रकृतेति अस्य च

ज्ञानं कारणं तद्भ्रमेणाप्यन्वयबोधात् । ननु संसर्गस्यापूर्वत्वात्कथं तद्ज्ञानसंभव इति चेदुच्यते योग्यताज्ञानमात्रं हेतुरस्ति चात्र पयः सेककरणताव-न्नवेति संशयरूपं ज्ञानं क्वचित्तन्निश्चयोऽपि यथा प्रत्यक्षेण दृष्टे घटोऽस्तीति

यत्र तादृशान्वयबोधो जातस्तत्राकाङ्क्षाभावं प्रदर्शयति । अत इति । वैधुर्यविरहादिति । तादृशान्वयबोधविरहाभावादित्यर्थः । निराकाङ्क्षतास्यादिति । आकाङ्क्षादन्यान्वयबोधविरहाभावादिति अत इति दाने तु दण्डेन गामानयेत्येतत्तात्पर्यविषयीभूतान्वयबोध-समानाकारकाकाङ्क्षाजन्यान्वयबोधविरहसत्त्वादिति भावः । न चेति । दण्डेन गामानयेत्येतत्प्रविष्टा यावतीविषयिता तच्छालिबोधः प्रकृतो न तु गामानयेतत्प्रविष्टविषयतामात्रशाली तथा च गामानयेति बोधो यदि तात्पर्यविषयीभूतनिखिलविषयताशाली स्यात्तदा दण्डेन गामानयेत्यनेन प्रकृतान्वयबोधेन समानाकारोऽपि स्यादित्यर्थः । दिगंस्तु अनाकाङ्क्षज्ञानस्य प्रतिबन्धकत्वेन तदभाव एव हेतुरस्तु किमाकाङ्क्षाज्ञानहेतुत्वेनेति चेन्न ग्राह्याभावानवगाहिनो ज्ञानस्य जनकज्ञानविघटनद्वारैव प्रतिबन्धकत्वात् । दृष्टं च व्यभिचारज्ञाने तथा हि । अनुमितौ व्यभिचारज्ञानं प्रतिबन्धकं तच्चानुमितिजनकीभूतव्याप्तिज्ञानविघटनद्वारैवेति । घटज्ञानविरोधिनो घटाभावज्ञानस्य घटज्ञानजनकीभूतज्ञानविघटकत्वाभावाद्ग्राह्याभावा-नवगाहि यत्रानाकाङ्क्षाज्ञानेऽप्रमाण्यनिश्चयस्तत्राप्रामाण्यनिश्चयानास्क-न्दितानाकाङ्क्षत्वज्ञानाभावापेक्षयाऽप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षानिश्च-यस्यैव लाघवेन हेतुत्वावधारणात् । अनाकाङ्क्षत्वज्ञाने प्रामाण्यसंशयाच्छाब्द-बोधादप्रामाण्यनिश्चयानास्कन्दितत्वस्यैव दातुमुचितत्वात् । अप्रामाण्यनिश्चयत्वं च तदभाववद्विशेष्यकत्वे सति तत्प्रकारत्वाभावाप्रकार-कत्वेसति तदभाववद्विशेष्यकत्वेसति तत्प्रकारकत्वप्रकारकत्वं तदनास्क-

न्वितकाङ्क्षत्वज्ञानाभावत्वेन तत्र मते कारणत्वं मम मते तु तदभाववद्विशेष्यकत्वेसति तत्प्रकारकज्ञानानास्कन्दितकाङ्क्षत्वाभावाप्रकारकत्वे सत्याकाङ्क्षात्वप्रकारकत्वेन हेतुत्वे महल्लाघवमिति कृतं पल्लवितेन । अथ योग्यतां निरूपति । योग्यतेति । प्रकृतसंसर्गवत्त्वं तात्पर्यविषयसंसर्गवत्त्वं । तथा चैकपदार्थे परःपदार्थे । अपरपदार्थस्य सेककरणत्त्वपदार्थस्य तात्पर्यविषयीभूतसंसर्गस्य सत्त्वादित्यर्थः कुत इत्यत आह पयसीति । यत्र समुद्रमध्यजलाभिप्रायेण पयसा विञ्चतीत्युक्तं तत्रायोग्यत्वं निर्वक्ति यस्मिन्निति । आकाशमिति । अभेदसंसर्गस्यैवाभेदान्वये तात्पर्यविषयत्वादिति भावः। अस्याः योग्यतायाः । कुत इत्यत आह तद्भ्रमेणेति स्वरूपसद्योग्यतायास्तत्राभावेन तज्ज्ञानस्याहेतुत्वे योग्यताभ्रमाच्छाब्दभ्रमो न स्यादित्यर्थः । अन्वयबोधात् अन्वयभ्रमात् नन्वेकपदार्थेऽपरपदार्थस्य शाब्दबोधगोचरान्वयस्य ज्ञानं कथं शब्दबोधात्पूर्वं भविष्यतीत्याह । नन्विति । अपूर्वत्वात्शाब्दबोधात्पूर्वमसिद्धेः । शाब्दबोधात्पूर्वं तादृशसंसर्गरूपयोग्यतासंशयसंभवेन प्रत्यक्षादिना तादृशनिश्चयसंभवेन च नानुपपत्तिरिति समाधत्ते उच्यत इत्यनेन । तन्निश्चयेपि योग्यतानिश्चयेपि । यथेति । प्रत्यक्षेण घटेऽस्तित्वसंसर्गे ज्ञाते घटोस्तीतिशब्दाच्छाब्दबोध इत्यर्थः । ननु संशयनिश्चयसाधारणयोग्यताज्ञानस्य हेतुत्वे योग्यतासंशयाच्छब्दो नित्यो न वेति वाक्यादितः संशयात्मक शाब्दबोधः स्यादिति चेन्न । अनन्यगत्या पदार्थोपस्थित्यादिरूपतदभाव शाब्दबोधसामग्र्यास्तद्वत्ताशाब्दबोधे तादृशतद्वत्ताशाब्दबोधसामग्र्याश्च तदभावशाब्दबोधे च परस्परम्विरोधित्वकल्पनात् । यदि च यथा संशयात्मिकानुमितिस्तथा संशयात्मकशाब्दबोधोपि रत्नकोषकारमतरीतिरनुसंधीयते तदा संसयात्मकत्वमपि वक्तुं शक्यमित्यवधेयम् ।

**परेत्वसंसर्गप्रग्रहः प्रतिबन्धकस्तदभावो योग्यता स्वरूपसती हेतुः । नचैवं जलह्रदो वह्निमान् इत्यपि**

असंसर्गाग्रहदशायां योग्यं स्यात् इष्टत्वात् । न च लाघवात्संसर्गज्ञानं कारणं न त्वसंसर्गाग्रह इति वाच्यम् असंसर्गाग्रहस्य लौकिकसाक्षात्कारातिरिक्तपित्तादिदोषाजन्यविशिष्टज्ञानमात्र एव हेतुत्वावधारणात् ।

नवीनमतमाह परेत्विति । असंसर्गग्रहः । तात्पर्यविषयीभूतैकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वग्रहः । तदभावोऽसंसर्गप्रतियोगित्वग्रहाभावः । योग्यतेति । अन्यत्र क्लृप्ततद्वत्ताज्ञाने तदभाववत्ताज्ञानस्य प्रतिबन्धकत्वेनैवायोग्यत्वज्ञानकाले शाब्दबोधापत्तेर्वारणसम्भवेनाल योग्यताज्ञानस्य कारणत्वेनेति भावः । एवं असंसर्गाग्रहस्यैवायोग्यताधः कारणत्वकल्पने । जलेति । जलह्रदो वह्निमानिति वाक्य जलह्रदो वह्न्यभाववानित्यसंसर्गग्रहाभावदशायां योग्यं स्यादित्यर्थः । अथ भूतल घटवदिति स्मरणोत्तरकालीनघटाभावलौकिकप्रत्यक्षानन्तर योग्यताज्ञानसत्त्वाद्घटवदिति शाब्दबोधापत्तेः शङ्खो न पीत इति स्मृतेरनुमितेर्वानन्तरं शङ्खः पीत इति भ्रमेपि योग्यताज्ञानसत्त्वाच्छङ्खः पीत इति शाब्दबोधापत्तेश्चेति शाब्दबोधसाधारणतया बाधाभावज्ञानस्य प्रतिबन्धकताया अवश्यं वाच्यत्वादित्यभिप्रायवानाहासंसर्गाग्रहस्येति । तथा च शाब्दबोधस्यापि तादृशविशिष्टज्ञानत्वेनाप्ययोग्यस्थले तदभाववत्ताज्ञानादेव न शाब्दबोध इत्यलं योग्यताज्ञानस्य कारणत्वेनेति भावः ।

कथमन्यथा चन्दनं न सुरभीति निश्चये सुरभिचन्दनमितिज्ञानं न स्यात् तदभावनुमितावपि चक्षुषा घटस्य लौकिकसाक्षात्कारः शङ्खेषु पीतत्वभ्रमश्च दृश्यत इत्यजन्यान्तम् ।

अन्धकारे घटाभावादिनिश्चयोत्तरमप्रामाण्यज्ञानमन्तरेणाप्यालोकादिसमवधानाद्भितो घटादिलौकिकप्रत्यक्षदर्शनाल्लौकिकसाक्षात्कारातिरिक्तेत्यस्य छत्यसम्भवेपि लौकिकत्वं लौकिकसंनिकर्षजन्यत्वमित्युपनीतभानांशे लौकिकीविषयतां ज्ञापयितुमाह कथमिति । यदि चोपनीतभानस्यांशेपि लौकिकीविषयता नोऽङ्गीक्रियते तदाह न स्यादिति । पित्तादिदोषाजन्येत्यस्य फलमाह शङ्ख इति नेदं रजतमिति बाधबुद्धौ विद्यमानायां दूरत्वादिदोषे सत्यपीदं रजतमिति भ्रमासम्भवात्पित्तादीत्युक्तं । तथा च भ्रमसामान्यस्य नाप्रतिबध्यत्वमिति भावः । भूतले घटाभावनिश्चये सत्यपि आहार्यलौकिकप्रत्यक्षोदयादनाहार्यत्वमपि प्रतिबध्यकोटौ देयं आहार्यत्व तु बाधबुद्धि कालीनेच्छाजन्यज्ञानत्वं । इत्थ च तदभाववत्ताज्ञानं त्रिविधं । तदभाववत्ताज्ञानं तदभावव्याप्यवत्ताज्ञानं तदभावावच्छेदकवत्ताज्ञानं चेति । तत्र तदभावविशिष्टज्ञानयोरेवं प्रतिबध्यप्रतिबन्धकभावः-तथा हि । अप्रामाण्यज्ञानानास्कन्दिततद्धर्मितावच्छेदकतद्धर्मावच्छिन्नतदिन्द्रियजन्यतदभावनिश्चयत्वेन प्रतिबन्धकता । दोषविशेषाजन्यलौकिकसंनिकर्षाजन्यानाहार्यतदिन्द्रियजन्यतद्बुद्धिज्ञानत्वेन प्रतिबध्यता भूतलङ्कुटाभाववदिति ज्ञानेऽप्रामाण्यज्ञाने जाते भूतलङ्कुटवदिति ज्ञाने बाधकाभावात्प्रतिबन्धककोटावप्रामाण्यज्ञानानास्कन्दितेति । अथ भूतलङ्कुटाभाववदिदञ्च ज्ञानमपेक्षाबुध्यात्मकाप्रमेत्यप्रामाण्य ज्ञानात्मको बाधनिश्चयस्ततो भूतलं घटवदिति विशिष्टबुद्धिस्ततो भूतलं घटाभाववदिति लौकिकप्रत्यक्षात्मको बाधनिश्चयस्तत्र यद तदप्रामाण्यज्ञानमुत्तजकं तदा द्वितीयबाधबुद्धिनिश्चयोत्पत्तिक्षणेऽग्रिमक्षणे च भूतलं घटवदिति ज्ञान स्यात् । सामानाधिकरण्यसम्बन्धेनाप्रामाण्यज्ञानवैशिष्ट्यस्य द्वितीयबाधबुद्धावपि सत्त्वात् । यदि च तदप्रामाण्यज्ञान नोत्तेजकं तदा प्रथमबाधबुद्धिद्वितीयक्षणेपि भूतलं घटवदिति ज्ञानं न स्यादिति चेन्न । अप्रामाण्यज्ञानस्य विषयत्वसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्य विवक्षितत्वात् । अत्र विषयतासम्बन्धेनाप्रामाण्यज्ञानवैशिष्ट्यस्य प्रथम-

ाधबुद्धावेत्रसत्त्वान्न दोषः। सामाधिकरण्यपदोपादानाच्चैत्रस्य वाधबुद्धौ त्रीयज्ञानमप्रमेति मैत्रस्य ज्ञानमादाय न दोषः ॥ गेहं घटाभाववदिति श्चयेपि द्रव्य घटवदिति द्रव्यत्वेन रूपेण गेहे घटवत्ताज्ञाने बाधका- ावात्तद्धर्मितावच्छेदकेति प्रतिबन्धककोटौ प्रतिबध्यकोटौ च विशेषणं। दौ वह्न्यभाववानिति वाधनिश्चयेपि हृदो द्रव्यवानिति वह्निर्द्रव्यत्वेन पेण ज्ञाने बाधकाभावात्कोटिद्वयेपि तद्धर्मावच्छिन्नेति विशेषणं देयं। पर्वतो ह्निमान्नवेति संशयकालीनपरामर्शाव्यवहितोत्तरमनुमितेरुदयात्प्रतिबन्ध- कोटौ निश्चयत्वं विशेषणं। मण्डूकवसाञ्जनेन वंशे उरगत्वभ्रमेपि स्वचा रग इति ज्ञानोदयात्तदिन्द्रियजन्यत्वं कोटिद्वयेपि विशेषणं। एवं द्भावव्याप्यवत्तानिश्चयतद्विशिष्टबुध्योरपि तथैव प्रतिबध्यप्रतिबन्धक- वः। यथायं स्थाणुभेदव्याप्यपुरुषत्ववान् स्थाणुत्वात्यन्ताभावव्याप्य- 'रत्ववाश्चेति निश्चयेऽयं स्थाणुरिति न विशिष्टबोधः एवं तदभावा- च्छेदकवत्ताज्ञानतद्विशिष्टबुध्योरपि तथैव प्रतिबध्यप्रतिबन्धकभावः। यथायं ाणुत्वाभावावच्छेदकपुरुषत्ववानिति निश्चयेऽयं स्थाणुरिति न विशिष्ट- बुद्धिरिति। विवेचितं चेदं वाधस्यानुमितिप्रतिबन्धकत्वविचारावसर इति ह। एवं च निरुक्तबाध्याभावनिश्चयस्य तादृशज्ञानमात्रे प्रतिबन्धक- ादयोग्यतानिश्चयस्य बाध्याभावनिश्चयात्मकत्वे न तत्सत्वे प्रति धकत्वादेव शाब्दबोधानुत्पत्तिः। न च योग्यताज्ञानस्य बाध्याभाव- नविधया प्रतिबन्धकत्वे इच्छासत्वे आहार्यप्रत्यक्षवदाहार्यशाब्दबोधा- त्तिरिति वाच्यम्। शाब्दानुमित्योरिच्छाजन्यत्वाभावेनाहार्यत्वानङ्गी- रात्। न चैवं शाब्दबोधानुत्पत्तौ योग्यताज्ञानस्य हेतुत्वमुच्यतामिति व्यम्। प्रतिबध्यकोटौ शाब्दान्यत्वदानेन योग्यताज्ञानस्य पृथक्कारणत्व यनेन च गौरवात्। यत्र गेह घटवदिति स्मरणानन्तरं घटाभाव- विशिष्टप्रत्यक्षं तत्र गेहं घटवदिति शाब्दबोधःस्यात्। स्मरणात्मकयोग्यता- नस्य सत्त्वाच्च। अथ मुखं चन्द्र इत्यादौ प्रहसनादौ योग्यताज्ञान 'धि बाधितार्थस्यापि शाब्दबोधाच्छाब्दान्यत्वमवश्यं प्रतिबध्यकोटौ

वाच्यं । तथा च न योग्यताज्ञानं कारणं न वाप्ययोग्यताज्ञानसत्त्वे शाब्दबोधाभावस्य निखिलजनसिद्धत्वादयोग्यताज्ञानस्य प्रतिबन्धकत्वात् । तथा च मुखं चन्द्र इत्यादौ कलहादौ च शब्दात्पदार्थोपस्थितौ मानमबोध एव । अथ वा चन्द्रपदमाल्हादके लाक्षणिकं । न चैवं कलहादौ मिथ्याभिलापादौ च शाब्दबोधाभावे कथं दुःखोत्पत्तिरूपं शाब्दधीः फलमिति वाच्यम् । शब्दात्पदार्थोपस्थितौ सत्या ममानेन गालन कृतमिति मानस ज्ञानादेव दुःखोत्पत्तेः । नन्विदं वाक्यमेतदर्थे तत्प्रतीतीच्छयोच्चरितमिति तात्पर्यज्ञानस्य ससर्गघटितस्य शाब्दबोधे हेतुत्व तत्र किं संसर्गविषयकतात्पर्यज्ञानत्वेन हेतुत्वं किं वा तात्पर्यविषयसंसर्गज्ञानत्वेनेति विनिगमनाविरहाद्दुयोरेव हेतुत्व तत्र तात्पर्यस्य प्राधान्यात्तात्पर्यज्ञानस्य ससर्गस्य प्राधान्याच्च संसर्गरूपयोग्यताज्ञानस्य हेतुत्वमिति समायातं योग्यताज्ञानहेतुत्वेनेति चेन्न हेत्वभिमतयोग्यताज्ञानत्वस्य संशयसाधारण्यात् । तात्पर्यज्ञानस्य तु निश्चयत्वेन हेतुत्वादिति । तस्माच्छाब्दबोध साधारणक्लृप्तप्रतिबध्यप्रतिबन्धकभावेनैवोपपत्तौ कृत योग्यताज्ञानस्य हेतुत्वेनेति सक्षेपः

न च घटेऽभिधेयत्वासंसर्गाप्रसिद्ध्या तद्ग्रहाप्रसिद्धिः । अभिधेयत्वप्रतियोगिकत्वेन योऽभावभ्रमस्तदभावस्य प्रसिद्धेः । यदि च सोऽपि न प्रसिद्धस्तदाऽऽस्तां तत्र योग्यता हेतुरेव । न चैवं व्यभिचाराच्छाब्दबोधं प्रति योग्यतायाः कथं कारणत्वमिति वाच्यम् । न हि शाब्दबोधत्वावच्छेदेन योग्यतायाः कारणत्वं । किं तु तदीयतादृशान्वयबोधे तदीयतादृशान्वयविरहनिश्चयाभावत्वेनैव विशिष्यैवेति क्व व्यभिचार इत्याहुः ।

केवलान्वयिनोऽभिधेयत्वस्याभावोऽप्रसिद्ध इति तद्बुद्ध्यप्रसिद्ध स्तथा चात्र तादृशासंसर्गाग्रहरूपायोग्यताविरहाद्व्यभिचार इति शङ्कते न चेति । ननु मास्त्वभिधेयत्वप्रतियोगिकाभावप्रमा परन्त्वभावे ऽभिधेयत्व-प्रतियोगिकत्वभ्रमे किं बाधकमिति समाधत्ते अभिधेयत्वेति । नन्व सत्ख्यात्यनङ्गीकारात्कथं तादृशभ्रमोपीत्यत आह । यदि चेति । तत्र-घटोभिधेय इत्यत्र अहेतुरेवेति पाठः ॥ योग्यता अहेतुरेव बाधबुद्ध्यभाव-रूपायोग्यता अहेतुरेव । एवं तादृशयोग्यताया घटोभिधेय इत्यत्र हेतुत्वे । तदीयतादृशान्वयबोधे मैत्रीयगोप्रकारककर्मत्वविशेष्यकान्वयबोधे तदी-यान्वयतादृशान्वयनिश्चयाभावत्वेन मैत्रीयगोपदार्थो नकर्मत्वसंसर्गीति-निश्चयाभावत्वेनेति तथा च गोप्रकार कर्मत्वविशेष्यकशाब्दबोधं प्रति-गोपदार्थो न कर्मत्वसंसर्गीति निश्चयाभावत्वेनेति । विशिष्याहेतुत्वे सिद्धे घटोभिधेय इत्यत्र योग्यताया विरहेपि तत्यभावेन व्यभिचाराभावा-द्बाधनिश्चयाभावातिरिक्तयोग्यतायां मानाभाव इति भावः । यद्वा हेतुरेवेति पाठः । तत्र घटोऽभिधेय इत्याद्यतिरिक्तस्थले हेतुरेव । बाध बुद्ध्यभावरूपायोग्यता । एवं तादृशयोग्यताया घटोभिधेय इत्याद्यतिरिक्त स्थलं प्रति हेतुत्वे व्यभिचारात् । घटो भिधेय इत्यत्र व्यभिचारात् । अन्यत्सर्वं पूर्ववत् ।

**आसत्तिः पदाव्यवधानं । अत एव गिरिरग्नि-मानित्यासन्नं । अनासन्नं च गिरिर्भुक्तमग्निमान्देवद-त्तेनेति । न चैवं स्थाल्यामोदनं पचतीति स्थाल्यामि-त्यस्य पाकेनानासन्नतापत्तिः । ओदनमित्यनेन व्यव-धानादिति वाच्यम् । प्रकृतान्वयबोधाननुकूलव्यव-धानाभावस्य विवक्षितत्वात् । ओदनपदं च स्थाल्य-धिकरणकौदनकर्मकपाककर्तेत्यन्वयबोधानुकूलमेव**

स्थाल्यां पचतीत्यन्वये तु अनासन्नमेवेति प्राञ्चः । न चैवं श्लोकादेर्योजनयाप्यन्वयबोधः कथं व्यवहितत्वेन प्रत्यक्षसिद्धेऽव्यवहितत्वेन भ्रमासम्भवादिति वाच्यम् । तत्र हि श्लोकपदान्नान्वयबोधः । किन्तु योजनावाक्यादित्याहुः ।

अवसरसङ्गत्यैककार्यकारित्वसङ्गत्या वाऽऽसत्तिं निर्वक्ति । आसत्तिरिति अनासन्नमिति । अत्र गिरिपदस्याग्निपदेन सहान्वये भुक्तपदस्य व्यवधानाद्गिरिपदं नाग्निपदेन सहासन्नमित्यर्थः । एवं आसन्नऽव्यवधानघटितत्वे स्थाल्यामिति । स्थाल्यधिकरणकौदनकर्मकपाकानुकूलकृतिमानिति बोधे स्थालीपदार्थस्यौदनकर्मकपाकेन सममन्वयादन्वासत्तेरपेक्षितत्वादव्याप्तिरिति भावः । प्रकृतेति । तात्पर्यविषयबोध एवात्र प्रकृतः । अत एव गिरिर्भुक्तमग्निमानित्यत्र गिरिपदस्याग्निपदेनसहानासन्नतेति । अथ स्थाल्यामोदनं पचतीत्यत्र स्थाल्यधिकरणकं यदोदनं तत्कर्मकपाकानुकूलकृतिमानित्यन्वये स्थाल्यामित्यस्यौदनेन सहासन्नता पाकेन सहत्वनासन्नतेति प्राचीनमतमाह । स्थाल्यामिति । पचतीत्यन्वये पाकेनान्वये । एवं प्रकृतान्वयबोधाननुकूलपदव्यवधानाभावस्यासत्तित्वविवक्षणे । श्लोकादेरिति श्लोकादौ प्रकृतान्वयीभूतमुख्यार्थान्वयाननुकूलानामपि पदानां व्यवधानसत्त्वादिति भावः । न च व्यवहितत्वभ्रमोऽत्रायं तत्र जायत एवेत्यत आहाव्यवहितत्वेनेति । मौनिश्लोके पदाभावेन पदघटितासत्तेरसम्भवादाहुरित्युक्तम् ।

वस्तुतस्तु आकांक्षादिमत्त्वे सति तात्पर्यज्ञाने व्यवहितादप्यन्वयबोधात्तद्विलम्बेनाविलम्बाच्च नैतद्ज्ञानं हेतुः । किं तु व्यवहितपदतात्पर्यज्ञानं । तच्चेतत्प-

दमेतत्पदाव्यवहितोत्तरमभिसन्धातु इत्यपि सन्धापयितुरिच्छा। अत एव मौनिश्लोकेप्यासत्तिः वक्तुरभावेप्यभिसन्धातुः सत्त्वात्। शुकवाक्ये च भगवत्तात्पर्यमादायैव गतिरिति नव्याः। तदपि न सत्यर्थतात्पर्यज्ञानादावेतद्विलम्बेन शाब्दबोधविलम्बाभावात्। तस्माद्वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः। सा च स्वरूपसती हेतुः। न हि पदार्थानुपस्थितावन्वयबोधः। न च वृत्त्या पदजन्येति व्यर्थं। घटपदात्समवायेनाकाशस्मृतौ घटोस्तीति वाक्यादाकाशान्वयबोधापत्तेः ननु घटमानयेत्यत्र घटकर्मत्वानयनकृत्युपस्थितीनां न युगपत्सम्भवः। आशुविनाशिनां क्रमिकाणां मेलकाभावादिति चेन्न। क्रमिकपदानुभवजन्यानेकसंस्कारैर्युगपत्तावत्पदस्मरणाद्युगपत्तावत्पदार्थोपस्थितावन्वयबोधः सम्भवतीति संक्षेपः। अत एव व्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिरित्यपास्तम्। तृतीयान्तवैयर्थ्यात्। व्यवहितोपस्थितावेकस्या उपस्थितेर्विनाशात्।

मिश्रमतमाह वस्तुतस्त्विति तात्पर्यज्ञान इति सतीत्यनुषज्यते। ननु ह्यवधानस्य प्रकृतान्वयबोधानुगुणत्वान्न व्यभिचार इत्यत आह तद्विलम्बेनेति। यद्वा। ननु व्यवधाने सत्यव्यवधानज्ञानस्यावश्यं तत्र सत्त्वान्न व्यभिचार इत्यत आह तद्विलम्बेनेति। तद्विलम्बेन आसत्तिज्ञानविलम्बेन। तत्र च। अव्यवहिततात्पर्ये च। एतत्पदमिति एतत्पद-

मेतत्पदाव्यवहितोत्तरमभिसंहितं भवत्विन्यभिसन्धापयितुरिच्छेति पाठः । एतत्पदं कर्मत्वपद एतत्पदाव्यवहितोत्तरं अभिसन्धातुर्ज्ञानेच्छुं प्रति अभिसन्धापयितुर्ज्ञापयितुर्मैत्रादेरिच्छेत्यन्वयः । अभिसन्दधातु इत्यभिसन्धापयितुरिति क्वचित्पाठः तथा चाभिसन्दधात्वभिसन्धानं करोत्वित्यर्थः । अत एव । आसत्तेस्तात्पर्यघटितत्वादेव । शुकस्य तादृशेच्छाया अभावादव्याप्तेराह । शुकेति तदपोति क्लृप्ततत्प्रतीतीच्छया वक्तृभिसन्धानरूपार्थतात्पर्यज्ञानविलम्बेन शाब्दबोधविलम्बाभावादित्यर्थः आदिना पदज्ञानपदार्थोपस्थित्याकाङ्क्षायोग्यतासंग्रहः तादृशोपस्थितेरावश्यकत्वमाह नहीति घटपदादिति । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन घटपदरूपसम्बन्धिज्ञानं गगनस्मारकमिति भावः । ननु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरित्युक्तं । तत्र पदज्ञानानां पदार्थोपस्थितीनां चाशुविनाशिनां क्रमिकाणां मेलकाभावात्कथं तावत्क्रियाकारकादिघटितवाक्यार्थबोध इत्याह नन्विति । आशुतरविनाशिनामेककालोत्पन्नचैत्रादिज्ञानानां मेलनसम्भवात्क्रमिकाणां घटादिपदानां मेलनसम्भवात्त्वोभयमुक्तं । क्रमिकेति । क्रमिकघटादिपदानुभवजन्यानेकसंस्काराणामुद्बोधकविधया पदार्थोपस्थितिजनकत्वमित्यर्थः । युगपदिति तथा च खले कपोतन्यायेन युगपदन्वयबोधोपपत्तेरिति भावः । तदुक्तं वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति । पदार्थानां वृद्धयुवशिशुसाम्यं तु चिरसन्निहितोपस्थितिविषयत्वेन पदार्थोपस्थितेः पूर्वपश्चाद्भाकाङ्क्षायोग्यतासत्तितात्पर्यविषयकं समूहालम्बनं ततः शाब्दबोध इति सङ्क्षेपार्थो बोध्य इति । ननु राजपुरप्रवेशन्यायेनैव खण्डवाक्यार्थबोधोत्तरं तावत्पदार्थसमूहालम्बनस्मृत्या।न्वयस्तदुक्त यद्यदाकाङ्क्षितं योग्य सन्निधान प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवावगम्यत इति कथं तावत्पदार्थाना खले कपोतन्यायेन बोध इति चेत्र । न वय खले कपोतन्यायेनैव सर्वत्रान्वयबोध इति ब्रूमोऽपि तु दण्डी कुण्डली वासस्वी घटं जानातीत्यत्र यतस्ते

इति यत्रोक्तं तत्र दण्डादिपदार्थानामेकदान्वयबोधे तात्पर्यमथ च
कदैव स्मृतिः तत उद्बोधकसमवधाने सति निखिलपदार्थानामुप
स्तत्र खले कपोतन्यायेनैवान्वयबोधः । यत्र च विशिष्टवैशि
तात्पर्यं तत्र खण्डवाक्यार्थबोधजन्य एव महावाक्यार्थबोधो राजपुर
न्यायेनेति । अत एव वृत्त्या पदजन्यपदार्थोपस्थितिमात्रस्यैवापि
देव । तृतीयान्तेति । व्यवधाने सत्यपि तादृशपदार्थोप
शाब्दबोधस्य जायमानत्वादिति भावः । ननु तर्हि गिरिर्भुक्तमग्नि
त्यादावग्निपदार्थस्य व्यवहितोपस्थितौ कथं न शाब्दबोध इत्यत
व्यवहितेति तथा च तत्रैकस्या उपस्थितेर्नाशात्तत्पदार्थोपस्थित्यभा
न शाब्दबोध इति भावः । अत्र प्रभाकराः । द्वारमित्यत्राध्या
पिधानाद्यर्थानामप्यन्वयबोधात्कथं पदजन्यपदार्थोपस्थितिः कारा
च पदमेवाध्याह्रियतामिति वाच्यम् अर्थस्यैवान्वयनिरूपकत्वं नोप
त्वात् शब्दस्मृतौ सत्यामप्यर्थस्मृतेरावश्यकत्वात् । न चैवं पचती
दैवात्स्मृतकपालादीनामप्यन्वयबोधः स्य दिति वाच्यम् । कपालादेरु
र्यविषयत्वाभावात् । अन्यथा तत्रापि दैवात्स्मृतकपालादेरप्यन्वय
स्यादिति । अत एव किं पचतीति पृष्टे सति तात्पर्ये वधूपदर्शितक
देरप्यन्वयबोध इत्याहुस्तदपरे न क्षमन्ते । द्वारप्रकारककर्मत्ववि
कबोधे द्वारपदोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वेन कर्मत्वप्रका
त्वर्थविशेष्यकबोधे धातुजन्योपस्थितित्वेन पिधानप्रकारककृतिवि
बोधे पिधानपदोत्तरकृत्युपस्थापकविभक्तिज्ञानत्वेन हेतुत्वमिति
ध्याहार आवश्यक इति दिक् ॥

**तात्पर्यं चेदं एतस्मिन्नर्थेऽस्यान्वयं प्रत्य यत्विति प्रयोक्तुरिच्छा प्रयोक्ता चाभिसन्धापि मात्रं । न तु वक्तैव । मौनिश्लोकाव्याप्तेः । शुकव च भगवदिच्छैव गतिः । तस्य च निश्चयो हे**

**अस्य च संशये व्यतिरेकनिश्चये चान्वयाबोधात् । तद्भ्रमे चान्वयबोधाच्चेति संक्षेपः ।**

तात्पर्यज्ञानस्यापि शाब्दबोधोपयोगित्वे तद्विषयीभूततात्पर्यं निर्वक्ति तात्पर्यमिति इदं गङ्गादिपदं । अस्मिन्नर्थे गङ्गाद्यर्थे । अत्र सप्तम्यर्थो विषयत्वं । अस्य श्रोतुः । अन्वयं प्रत्याययतु । अन्वयबोधं जनयतु तथा च यदा गङ्गादिपदं प्रवाहविषयकं ज्ञानं जनयत्वितीच्छा तदा प्रवाहविषयकमेतज्ज्ञानं जायते यदा गङ्गादिपदं तीरविषयकं ज्ञानं जनयत्वितीच्छा तदा तीरविषयकमेवज्ञानमित्यर्थः । ननु प्रयोक्ता वक्ता । तथा च मौनिश्लोकादौ वक्तुरभावात्कथ तद्घटितात्पर्यमित्यत आह प्रयोक्तेति । अभिसन्धापयितृमात्रं तथा च यत्र वक्ता संभवति तत्रानुसन्धानकर्त्ता वक्ता । यत्र च मौनिश्लोकादौ वक्ता न संभवति तत्रानुसन्धापको मुनिरेवेति नानुपपत्तिरन्योपीति । प्रयोक्तृपदार्थस्य वक्तृमात्रार्थत्वे बाधकमाह मौनीति । ननु तात्पर्यज्ञानं न शाब्दबोधे हेतुस्तेन विनापि शुकवाक्यादन्वयबोधात् । न च कथं तर्हि नानार्थस्थलेऽर्थप्रत्यय इति वाच्यम् । प्रकरणादिज्ञानादेवार्थप्रत्ययादित्यत आह शुकवाक्ये चेति । भगवदिच्छैव भागवतस्तादृशेच्छैव । अथ नानार्थस्थले एकदोभयबोधाभिप्रायेण सैन्धवमानयेत्यभिहित तत्रोभयबोधे सकृदुच्चरितः शब्दः सकृदर्थं बोधयतीति व्युत्पत्तिभङ्गः स्यादिति चेन्न । उभयार्थयोरेकोच्चारणेप्यावृत्त्यान्वयबोधात् । पुष्पवन्तादिपदे दिवाकरनिशाकरादि वृत्तिद्वित्वस्यैव शक्यतावच्छेदकत्वादिति । तस्य च तात्पर्यस्य च । तात्पर्यनिश्चयस्य हेतुत्वे यत्संशयव्यतिरेकौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति व्याप्तिं सूचयति । अस्येति । नन्वियं व्याप्तिरप्रयोजिकेत्यत आह तद्भ्रमे चेति । यद्वा ननु स्वरूपसदेव तात्पर्यं कारणं न तु तज्ज्ञानमिति दूरे तन्निश्चयस्य कारणत्वमित्यत आह तद्भ्रमे चेति । तद्भ्रमे तात्पर्यभ्रमे । अत्रायं संक्षेपार्थः । यथा वेदस्यानादिपरम्परागतो

च्चारणत्वादुच्चारणपरतन्त्रं न तु केन चिदुच्चरितं स्तथा तात्पर्यस्याप्य-नादित्वं ननु कस्य चिदिति पूर्वपूर्वाध्यापकपरम्परयानादित्वसंभवा-दिति चेन्न । वेदः पौरुषेयो वाक्यत्वाद्भारतवदित्यनुमानेन वेदस्य सादित्वे सिद्धे तद्दृष्टान्तेन तात्पर्यस्यानादित्वसाधनस्यानु-चितत्वात् । अत एवेश्वरसिद्धिः सूचितेति विवेचितं चेदम-धस्तादिति ॥

## सोऽयं शब्दो द्विविधः । विधिरर्थवादश्च । तत्र विध्यभिधायकः प्रत्ययस्तद्घटितवाक्यं वा विधिः ।

अथाचारमूलत्वं वेदस्य प्रवर्त्तकज्ञानजनकत्वमन्तरेण नोपपद्यमिति प्रवर्त्तकं ज्ञानं निरूपयितुम्भूमिकामारचयति । सोयमिति । विध्यभिधायक-प्रत्ययः । कर्त्तव्यार्थोपदेशप्रत्ययः । विध्यभिधायकत्वं विधिशब्दस्याप्य स्तीत्यतः प्रत्यय इत्युक्तं । ननु शब्दस्य विध्यर्थवादात्मकत्वभेदेन द्वैविध्यं तत्र विधिसमभिव्याहृतस्यैवार्थवादात्मकत्वमिति वक्ष्यते तथा च प्रत्यय मात्रस्य विधित्वे तत्समभिव्याहृतवाक्यस्य क्वान्तर्भाव इत्यत आह तद्घटितेति । अभिधेयविधिश्चेति । विधेरभिधेय कार्यत्वमित्यर्थः यद्वा भट्टमताभिप्रायेणाभिधेय इति सविसर्गः पाठः विधिश्चेति भिन्नै-व फक्किका । अभिधेयोऽभिधारूपव्यापारवानित्यर्थः । अत्र भट्टानामयमाशयः इष्टसाधनताज्ञानं न प्रवर्त्तकं वैदिकनित्यप्रवृत्तौ व्यभिचारात् । किन्त्वभिधाज्ञानं । अभिधा च प्रवृत्तिजनकः प्रवर्त्तयितुर्धर्मः स एव प्रव र्त्तनापदवाच्यो भावनापदवाच्योपि सचाचेतनस्य लिङ्गादेः पदार्थान्तरं । चेतनस्य तु स्वेच्छारूपोऽहमेनं प्रवर्त्तयामित्यनुभवसिद्धः । प्रवृत्तिरपि द्विविधा स्वेच्छया परप्रेरणया च । अहं स्वयमेव प्रवर्त्तयामीति व्यवहा रात् । एवमानयनादावाचार्यो मां प्रवर्त्तयतीति यागादौ विधिर्मां प्रवर्त्त

यतीति व्यवहाराच्च तथा च यत्र शब्दश्रवणोत्तरं प्रवृत्तिस्तत्र विधेराचार्यादेश्च स्वतो न प्रवर्त्तकत्त्वं सामर्थ्याभावात्किं तु स्वप्रवर्त्तनाज्ञापने परेच्छोत्पादनद्वारेति सिद्धं स्वनिष्टप्रवर्त्तनाज्ञापनेन वेदः प्रवर्त्तक इति । प्रवर्त्तनाज्ञानं प्रवृत्तौ हेतुरिति शब्दश्रवणोत्तरं प्रवृत्तिदर्शनात् बालेनान्वयव्यतिरेकाभ्यां तथैव निश्चितत्वात् । ननुप्रवर्त्तनाज्ञापनेन वेदः प्रवर्त्तक इति को वा मन्त्रपाठः पठ्यत इति चेन्न । विवादविषयो लिङ्परनिष्ठव्यापारानुकूलस्वनिष्टव्यापारवान् परनिष्टव्यापारजनककरणत्वात् दण्डादिवदित्यनुमानात् । भवति च दण्डादौ चक्रनिष्टभ्रमिरूपो व्यापारस्तज्जनकत्त्वं स्वनिष्टस्पन्दनद्वारैव । एवं काष्ठेपि तण्डुलनिष्टविक्लित्तिजनकत्त्वं स्वनिष्टप्रज्वलनद्वारैवेति । तथा च यत्परनिष्ठव्यापारजनक सत्करणं तत्तदनुकूलधर्मवदिति व्याप्तिरत्र बोध्या । दण्डादेः स्वनिष्ठव्यापारजननेस्वनिष्ठव्यापारस्य नियमेनानपेक्षणात्परनिष्ठेत्युक्तम् दण्डनिष्ठस्पन्दनस्य चक्रभ्रमिजनकत्वात्तत्र स्पन्दने व्यभिचारवारणाय हेतौ सामान्यव्याप्तौ च कारणेत्युक्तं । स च शाब्दीभावनाऽऽर्थीभावनाभेदेन द्विविधः । द्वयोरपि किं केन कथमित्यंशत्रयवत्त्वं किं भाव्यं कथं भाव्यमित्याकाङ्क्षाया उभयत्र तुल्यत्वात् । तत्र शब्दभावनायाः प्रवृत्तिर्भाव्या केन भाव्यमित्याकाङ्क्षायां लिङादिपदं प्रवर्त्तनाशक्तमित्याकारकशक्तिग्रहेण भाव्य शक्तिग्रहमन्तरेण शाब्दबोधानुदयात्तदनुदये प्रवृत्तेरनुदयात्कथं भाव्यमित्याकाङ्क्षायां वायुर्वैक्षेपिष्ठादेवतेत्यादिवाक्यानामिति कर्त्तव्यतारूपप्रशस्तफलबोधकत्वेनाङ्गतयोपयोगः । न च प्रवर्त्तनाज्ञाने सति प्रवृत्तेरुदयात्स्तुतिरूपेतिकर्तव्यतास्वरूपायाः प्ररोचनायाः किं प्रयोजनमिति वाच्यम् कष्टं कर्मेति न्यायादुपायोन्यत्र द्वेषशालिनः प्रवर्त्तेरनुत्पादात् । तथा च प्रशस्तफलबोधकत्वेन तत्र द्वेषं निराकुर्वती श्रुतिः प्रशस्तफलबोधिकेत्युपयुज्यते । तथा च शब्दभावनाया अर्थभावनाया अर्थभावनारूपप्रवृत्तिर्भाव्या । शक्तिग्रहः कारणं स्तुत्यर्थवाद इतिकर्त्तव्यता । एवं च शक्ति-

यत्नेन स्तुत्यर्थवादोपकृते न विधिः पुरुषप्रवृत्तिं भावयेदिति लक्षणशब्द कल्पनेन शब्दभावनान्वयबोधः । तस्यांशत्रयमुक्तं भट्टैः । लिङोभिधा सैव च शब्दभावना भाव्या च तस्यां पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीय प्ररोचना चाङ्गतयोपयुज्यत इति । लिङः अभिधानामकः कश्च-नव्यापारविशेषः । सैव । अभिधैव शब्दभावनापदवाच्याप्यभिधैवेत्यर्थः तस्याः शब्दभावनायाः । सम्बन्धबोधः लिङादिपदं प्रवर्त्तनाशक्तमित्या-कारकशक्तिग्रहः । प्ररोचना प्रशस्तफलबोधक वाक्यमिति । अर्थभावना हि चेतननिष्ठक्रियानुकूलो व्यापार एव । तस्याः स्वर्गः कर्म यागः करणं प्रयाजादीति कर्त्तव्यता । एवं च स्वर्गकर्मिका यागकरणिका प्रयाजादीति कर्त्तव्यताका भावना स्वर्गकामकर्त्तृकेत्यर्थभावनाबोधः । सा पुनः शब्दभावनातोऽतिरिक्ता सर्वाख्यातपदवाच्या । तदुक्तं अभिधाभा-वनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचर इति । अर्थित्वादर्थः पुरुषः धर्मधर्मिणोरभेदात् । अर्थनिष्ठ भावनाया अप्यर्थात्मकत्वमिति । अर्थार्थेति पाठे तु अर्थार्थत्वं अर्थगो-चरत्वमित्यर्थः इयमपि किं केन कथमित्याकाङ्क्षायाः सत्त्वादंशत्रयवती किम्भाव्यमित्याकाङ्क्षायां स्वर्गो भाव्यः केन भाव्य इत्याकाङ्क्षायां यागेन भाव्यं । तथा कथं भाव्यमित्याकाङ्क्षायां प्रयाजादिसहकारेण भाव्यं । तथा च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ ज्योतिष्टोमकरणिका-स्वर्गकामकर्तृका स्वर्गकर्मिका प्रयाजादीतिकर्त्तव्यताका भावनेति बोधः । तथा च सर्वत्राख्यातार्थभावनादिविशेष्यक एव बोधः । न च पदोपस्था-पितपदार्थस्यैव शाब्दबोधविषयत्वादितिकर्त्तव्यतायाः कथ शाब्दबोध-विषयत्वमिति वाच्यम् । प्रधानविधिविधेयत्वमङ्गानामित्यनुरोधात्तस्या पि शाब्दविषयताया उचितत्वात् । यदि च तन्न स्वीक्रियते तदा न भव-त्येव तस्याः शाब्दबोधविषयत्वमिति । अथ यागस्य न भावनाकरणत्वं भावनाजन्यत्वादिति चेन्न करणत्वं फलोद्देश्यकप्रवृत्तिकपुरुषव्यापारवि-षयत्व भवति च फलोद्देश्यकप्रवृत्तिकपुरुषव्यापारविषयत्वेन करणत्वं

कुठारादेस्तथा यागस्यापि फलोद्देश्यकव्यापारविषयत्वात्करणत्वमिति ।
अत्रेदं प्रतिभाति । अर्थभावनातिरिक्तशाब्दभावनायां मानाभावात् । तथा
हि । अतिरिक्तपदार्थत्वलिङ्निष्ठत्वप्रवृत्तिकारणत्वकल्पने महागौरवा-
त्तथा च लाघवादर्थभावनायाः सर्वाख्यातशक्यायाः लिङादिनिष्ठभाव-
नाभिन्नत्वेन क्लृप्तायाः प्रवृत्तिहेतुत्वस्यैव न्याय्यत्व त् । इत्थ च लिङनि-
ष्ठभावनातोऽप्यतिलाघवेनेष्टसाधनत्व एव शक्तिरुच्यतां । यागादाविष्ट-
साधनताज्ञानादेव प्रवृत्तेः तथा चार्थभावनायाः प्रवृत्तिहेतुत्वमिति गुड
जिह्विका । अत एवेष्टसाधनत्वमेवभाश्नेति भावनात्वं लिङादिशक्यता-
वच्छेदकमिति इष्ट साधनत्वज्ञानमेव प्रवर्त्तकमिति मण्डनमिश्राः । न चेष्ट
साधनत्वस्य लिङाद्यवृत्तित्वेन कथं भावनात्वमिति वाच्यम् । लिङ्निष्ठप्रवर्त्त
नात्वेन हेतुत्वकल्पने गौरवात् नतु न वयं लिङादिनिष्ठप्रवर्त्तनात्वेन
हेतुत्व ब्रूमो येन गौरवं किं त्विष्टसाधनत्वस्याशुतरविनाशियागनिष्ठ-
त्वेन कथ तस्य स्थायिनिष्ठप्रवर्त्तनात्मकत्वं भविष्यतीति चेन्न । प्रवर्त्तनायाः
स्थायिनिष्ठत्वे मानाभावात् स्थायिनिष्ठप्रवर्त्तनात्वेन हेतुत्वकल्पने
मानाभावाच्च इत्थ च लिङादिजन्यप्रवर्त्तनाज्ञानमेव प्रवर्त्तक लिङस्त्विष्ट-
साधनत्व एव शक्तिकल्पनात्तज्जन्य ज्ञानमिष्टसाधनज्ञानमेव तदेव प्रवर्त्तक
सर्वाख्यातसाधारणभावनाज्ञानं तु न प्रवर्त्तकं पचतीत्यादितः प्रवृत्त्या-
पत्तेः । अथ परनिष्ठव्यापारजनकत्व स्वनिष्ठव्यापारद्वारैवेति व्याप्तिबला-
देव प्रवर्त्तनासिद्धिरिति चेन्न । परनिष्ठपरामर्शात्मकव्यापारजनके स्वनि-
ष्ठव्यापारशून्ये करणे व्याप्तिज्ञाने व्यभिचारात् । न च स्वव्यधिकरणपर-
निष्ठव्यापारजनककरणत्व ज्ञानान्यपरनिष्ठव्यापारजनककरणत्व वा हेतु-
रस्तु व्याप्तिज्ञानस्य परामर्शव्यधिकरणत्वाभावेन ज्ञानान्यत्वाभावेन च
भावनायाश्च प्रवृत्तिव्यधिकरणत्वेन ज्ञानान्यत्वेन च न व्यभिचार इति
वाच्यम् । अप्रयोजकत्वात् । पितृनिष्ठस्वर्गादिजनके गयाश्राद्धादौ व्यभिचा-
राच्च । यदि च विधिर्मां प्रवर्त्तयतीति प्रतीतिबलादेव प्रवर्त्तनासिद्धि-

स्तदा धूमो मां प्रवर्त्तयतीति बलाद्धूमनिष्ठप्रवर्त्तनासिद्धिरस्तु यदि तु तत्रानुमिति रूपैव भावना तदास्तां प्रकृतेऽपि विधिवाक्यज शाब्दबोधात्मिकैव भावनेत्यलमतिरिक्तभावनयेति दिक् ।

**अभिधेयविधिश्च कार्यत्वं तच्च कृतिसाध्यात्वमिति किमत्र मानमिति चेत् । उच्यते । विधिस्तावत्प्रवर्तकज्ञानमजनयित्वा प्रवृत्तिजनिकामिच्छामजनयित्वा न प्रवृत्तिजननायालं । अतो यस्य बुद्धिः प्रवृत्तिजननीमिच्छां सूते सविधेरभिधेयः । प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारिकेच्छा तज्जननी च कृतिसाध्यत्वप्रकारिकाबुद्धिः । कृत्यसाध्यत्वज्ञाने तदनुत्पत्तेः । न तु कृत्यसाध्यत्वज्ञानाभावो गौरवात् । सर्वदा चिकीर्षोत्पत्त्यापत्तेश्च सर्वदा तत्सत्वादतः कृतिसाध्यत्वमेव विध्यर्थ इति ।**

अथ प्राभाकरमतमुत्थापयति विधिश्चेति । विध्यर्थश्चेत्यर्थः । तच्च कार्यत्वं च । अत्र कार्यत्वस्य विध्यर्थत्वेन ज्ञानस्य प्रवृत्तिहेतुत्वेचिकीर्षैव द्वारं सा च कृतिसाध्यत्वप्रकारकेच्छा तज्जनकं कृतिसाध्यत्वज्ञानमिति कृतिसाध्यत्वम्विध्यर्थ इत्यभिप्रायवानाह । विधिरित्यादिना अलं समर्थः । अतस्तादृशज्ञानेच्छयोर्जननमन्तरेण विधेः प्रवृत्तिजनकत्वाभावात् । यस्येति षष्ठ्यर्थो विषयत्वं । अभिधेयः साध्यः कीदृशेच्छायाः प्रवृत्तिजनकत्वमत आह प्रवृत्तीति । तज्जननीति । तथा च परर्याचतमण्डनन्यायेन ज्ञानेच्छयोः समानप्रकारकत्वमिति भावः । ननु कृतिसाध्यत्वप्रकारकेच्छात्वेन प्रवृत्तित्वावच्छिन्नं प्रति न हेतुत्व गौरवात् किं तु कृतीच्छात्वेन लाघवात् । तदुक्तं सोंडलोपाध्यायैः । चिकीर्षेत्यत्र कृधातोः

कृतिरर्थः। सनप्रत्ययार्थः कृतिगोचरेच्छा सनो धात्वर्थगोचरेच्छावाचित्वात् तथा च कृतीच्छैव चिकीर्षा शब्दार्थः सा च कृतीष्टसाधनताज्ञानजन्येति चेन्न । यदि विषयतासम्बन्धेन कृतिविशेष्यकं ज्ञानं प्रवर्त्तकं तर्हि पाकः कृतिरिष्टसाधनमिति ज्ञानादपि पाकविषयकप्रवृत्तिप्रसङ्गः । यदि तु साध्यतासम्बन्धेन पाकत्वप्रकारकं ज्ञानं प्रवर्त्तकं तदासाध्यत्वस्य च तव मते संसर्गविधया भानं मम मते तु प्रकारतयेति किन्तव मते लाघवमिति । किं च वह्निना पाकं साधयामीत्यनुभवस्य वह्निसाध्यत्व प्रकारकत्वमिव कृत्या पाकं साधयामीत्यनुभवस्यापि कृतिसाध्यत्वप्रकार-कत्वस्य दुरुपपह्नवत्वादिति संक्षेपः। ननु कृतिसाध्यत्वप्रकारकसंशये तद्व्यति-रेकनिश्चये वा प्रवृत्त्यभावेन तन्निश्चयत्वेनैव हेतुत्वं वाच्यं तन्निश्चयत्वं कृतिसाध्यत्वाभावाप्रकारकत्वे सति कृतिसाध्यत्वप्रकारकज्ञानत्वमिति त-दपेक्षया कृत्यसाध्यताज्ञानत्वेनैव प्रतिबन्धकत्वन्तदभावत्वेनैव कारणत्वमु-च्यतामित्यत आह नन्विति तथा च तत्साध्यत्वप्रकारकेच्छायास्तत्प्रकारक-ज्ञानजन्यत्वनियमेन कृतिसाध्यत्वप्रकारकेच्छानुरोधात्तत्प्रकारकं ज्ञानमवश्यं वाच्यमित्यर्थः । न च विसम्वादीच्छायां भेदाग्रहस्य हेतुत्वात्तत्र व्यभिचार इति वाच्यम् । तत्रापि तादृशनिश्चयस्यैव हेतुत्वात् । अथवा पाको न मत्कृतिसाध्यः पाके न मत्कृतिसाध्यत्वं पाके मत्कृतिसाध्यभेदः पाको मत्कृतिसाध्यत्वाभाववान् पाको न कृतिसाध्यः पाके कृतिसाध्यभेदः पाको न साध्य इत्यादि ज्ञानानां प्रतिबन्धकत्वं तदभावानां च हेतुत्व मिति तदपेक्षया लाघवेन कृतिसाध्यत्वनिश्चयस्यैव हेतुत्वं न वाप्रमा ण्यज्ञानानास्कन्दितकृतिसाध्यतानिश्चयत्वेन हेतुत्वे गौरवमिति वाच्यम् । त्वन्मतेऽप्यप्रामाण्यज्ञानानास्कन्दितकृत्यसाध्यताज्ञानाभावानां हेतुत्वे महद् गौरवादित्यभिप्रायवानाह गौरवादिति दूषणान्तरमाह सर्वदेति । सर्वदा कृत्यसाध्यत्वज्ञानाभावकाले । अयं सर्वदेत्यस्यायमेवार्थः यद्वा । कृतिसाध्य त्वात्यन्ताभावकृतिसाध्यभेदादिज्ञानानां प्रत्येकं प्रतिबन्धकत्वे गौरवं यत्किञ्चिदेककृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वे यत्किञ्चिदेककृत्यसाध्य

स्वज्ञानकालिकपरकृत्यसाध्यत्वज्ञानाभावानां सर्वदासत्त्वात्सर्वदा चिकीर्षा-पत्तिरित्यभिप्रायवानाह सर्वदेति । इदमुपलक्षण । बाधाभावानवगाहिने-ऽनवगाहिना ज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वं अनुमितौ व्यभिचार-ज्ञानवदिति । इत्थञ्चकृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वस्वीकारे कृतिसाध्य ताज्ञानस्य हेतुत्वमवश्यमेवेति भावः ।

नन्वेवं मण्डली कुर्यादिति वाक्यादुत्पन्नकृति-साध्यताज्ञानवतो बलवदनिष्टजनकमेव मण्डलीक-रणं जानतो मण्डलीकरणे प्रवृत्तिः स्यात् । अथ बलवदनिष्टाननुबन्धी कृतिसाध्यताज्ञानं प्रवर्तकमिति चेत् । इत्थमपि इष्टाजनकत्वेन बलवदनिष्टाननुबन्धि कृतिसाध्यत्वमण्डलीकरणं जानतस्तत्र प्रवृत्तिः स्यात् प्रवृत्तिजनकज्ञानस्य सत्त्वात् ॥

एव कृतिसाध्यत्वस्य विध्यर्थत्वे । मण्डली बौद्धानां कर्मविशेषः । नरकाद्यनिष्टजनकत्वेति प्रवृत्त्यभावे बीजमाह बलवदिति । बलवद निष्टाननुबन्धित्वमपि विध्यर्थ इत्याशयेनेति । बलवदनिष्टाननुबन्धित्वं च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं नान्तरीयकत्व इष्टोत्प-त्त्यावश्यकत्वं यागस्यापि श्रमादिदुःखजनकत्वेन तत्र प्रवृत्तिर्न स्यादतोऽ-धिकान्तं क्वचिदपेक्षया कस्य चिदाधिक्येनाधिकदुःखाजनकत्वेऽप्युक्ते न निस्तार इति प्रथमदुःखान्त । मण्डलीकरणस्य नरकरूपबलवद्दुःखजनक-त्वाद्दोषः । यद्वा बलवदनिष्टाजनकत्वं पापाजनकत्वं । इत्थमपि बलवद-निष्टाननुबन्धित्वयोर्विध्यर्थत्वेपि प्रवृत्त्यापादकबीजमाह बलवदिति । तत्र मण्डलीकरणे ।

अत्र प्राभाकरमतान्तरवर्तिनः । नित्ये शौचा-दिमत्त्वप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्तकं ।

अन्यत्र चेष्टसाधनताज्ञानजन्यमिष्टसाधनताज्ञानकालीनं वा कार्यताज्ञानं हेतुः प्रवृत्तिसामान्ये च कृतिसाध्यताज्ञानसामान्यमिति न कश्चिद्दोषः । न चैवं लाघवादिष्टसाधनताविषयककृतिसाध्यज्ञानमेव प्रवृत्तिसामान्ये हेतुरिति वाच्यम् । नित्ये तदभावात् । साध्यत्वसाधनत्वयोर्विरोधेनैकस्यैकस्मिन्कृतिसाध्यत्वेष्टसाधनत्वयोर्भानासम्भवाच्च । कथमनयोर्विरोध इति चेत् । इत्थं साधनत्वं हि सिद्धधर्मः ॥ असिद्धावस्यात्कार्यानुत्पत्तेः । साध्यत्वं असिद्धधर्मः सिद्धतादशायां तदभावात् । न चैकदा सिद्धमसिद्धं च । येनैकदा कृतिसाध्यमिष्टसाधनं च स्यादिति ॥

अत्रेति । तेषामयमाशयः । स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्त्तकं तदर्थश्च स्वं प्रवर्त्तमानः पुरुषस्तद्विशेषणं कामना शौचादिश्च तद्वत्ता तद्विद्यमानता । तत्प्रतिसन्धानं तज्ज्ञानं । तज्जन्यं यत्कार्यताज्ञानमित्यर्थः । तत्र शौचादि पुरुषविशेषणं अनित्येतु कामनापुरुषविशेषणं कामनावत्त्वं स्वविषयसाधनतासम्बन्धेन यागयाकादौ स्व कामना इच्छाविशेषः । तद्विषयस्वर्गादिः तत्साधनं यागादिस्तथा च यागादौ मण्डलीकरणादौ वा स्वेष्टजनकत्वज्ञान तदा कामनाविषयसाधनत्वज्ञानाभावेन न तत्र प्रवृत्तिरिति । एवं यदा हमशुचिरिति ज्ञान तदाशौचादिम त्वप्रतिसन्धानाभावाच्च प्रवृत्तिरिति नित्ये सन्ध्यावन्दनादौ शौचादीति शुचितत्कालजीवित्व सन्ध्याद्यङ्गं तत्राहं शुचिरित्यादिज्ञानेन सन्ध्यावन्दनं कार्यमिति ज्ञानं जन्यत इति । यदाहमशुचिरित्यादिज्ञान । यदा च नेष्टसाधनताज्ञानं तदा तादृश तज्जन्य कार्यताज्ञानाभावादेव न प्रवृत्ति-

रिति भावः । अन्यत्र अनित्ये इष्टेति यागादाविष्टसाधनताज्ञानेन यागादौ कार्य्यताज्ञानं यदा च नेष्टसाधनताज्ञानं तदातादृशकार्य्यताज्ञानाभावान्न प्रवृत्तिरिति भावः । ननु बालस्याद्यस्तनमानप्रवृत्तौ जीवनादृष्टसहकारेणेष्टसाधनतास्मरणं कार्य्यतास्मरणं तत्र कार्य्यताज्ञानस्येष्टसाधनताज्ञानसमानकालीनत्वेपि न तज्जन्यत्वमत आहेष्टसाधनताज्ञानकालीनमिति प्रवृत्तीति । न च सामान्यतः । कार्य्यताज्ञानात्प्रवृत्तिसामान्यं जायतामिति वाच्यम् विशेषसामग्रीं विना सामान्यसामग्र्याः कार्य्यजनकत्वाभावात् । एवं तादृशज्ञानस्य प्रवृत्तिहेतुत्वे । लाघवादिति । तव नित्यविषयकप्रवृत्तौ शौचादिमत्वप्रतिसन्धानजन्यकार्य्यताज्ञानत्वेनानित्यविषयकप्रवृत्तौ काम्यवत्वप्रतिसन्धानजन्यकार्य्यताज्ञानत्वेन सामान्यप्रवृत्तौ कार्य्यताज्ञानत्वेन हेतुत्वं । मम तु स्वेष्टसाधनताविषयककार्य्यताज्ञानत्वे न हेतुत्वे एक एक कार्य्यकारणभाव इति । नित्ये सन्ध्यावन्दनादौ तदभावात् । इष्ट साधनताविषयककृतिसाध्यत्वज्ञानाभावात् । यद्वा ननु नित्येपि फलश्रवणेन तादृशकार्य्यत्वज्ञानस्य कारणत्वे बाधकाभावात् अत आह साध्यत्वेति । विरोधेति । एकस्मिन्यागे कृतिसाध्यत्वमिष्टसाधनत्वमेकदाविरुद्धमित्यर्थः । एकस्य चैत्रादेः । एकस्मिन्यागे । विरोधं प्रतिपादयति इत्यमिति सिद्धधर्मे इति । असिद्धेन कारणेन कार्य्यस्याजननादित्यर्थः । तदेवाह । सिद्धे चेति तदभावात् । साध्यत्वाभावात् ।

**अत्र जरन्नैयायिकाः । इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमेव लाघवात्प्रवर्तकं । नत्विष्टसाधनताज्ञानजन्यकार्य्यताज्ञानादि गौरवात् । न च नित्ये इष्टसाधनताज्ञानासम्भवो फलाभावादिति वाच्यम् । नित्येऽपि बहुशः फलश्रुतिः यत्र फलश्रुतिर्नास्तितत्रास्तां विश्वजिन्न्यायात्स्वर्गः फलं प्रत्यवायपरिहारो वा । न**

चैवं फलकामनाधीनकर्तृकत्वे काम्यत्वं स्यान्न तु नित्यत्वमिति वाच्यम्। न हि फलकामनानधीन कर्तव्यत्वं नित्यतां ब्रूमः । किं तु यदकरणे प्रत्यवायस्तत्वं । तच्च कामनोपाधिकर्तव्यत्वेप्यक्षतमेव । न चैवं फले यदा कामना नास्ति तदा सन्ध्यावन्दनादौ प्रवृत्तिर्न स्यादिति वाच्यम् । इष्टत्वात् । न हि प्रयोजनमनुद्दिश्य मन्दोपि प्रवर्तते ।

कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुत्वं । तत्रेदमिष्टजनकमिति ज्ञानात्कृतिसाध्यत्वज्ञाने सत्यायः प्रवर्तेतातः कृतिसाध्यत्वविषयकज्ञानस्य चिकीर्षाद्वारोपयोगित्वेन कृतिसाध्यत्वप्रकारिकेच्छायामिष्टसाधनत्वविषयककृतिसाध्यत्वप्रकारकज्ञानस्यैव हेतुत्वादित्याद्यभिप्रायवानाह जरन्नैयायिका इति । लाघवात् प्रवृत्तिसामान्यंप्रत्येकस्य कारणत्वकल्पनेन लाघवात् । गौरवादिति नित्यविषयकप्रवृत्तिं प्रतिशौचादिमत्वप्रतिसंधानजन्यकार्यताज्ञानत्वेन कामनाविषयसाधनतासम्बन्धेन कामनावत्कृतिसाध्यताज्ञानत्वेन कारणत्वकल्पने गौरवादित्यर्थः । ननु नित्यस्य सन्ध्यावन्दनादेर्निः फलत्वेन कथं तत्रेष्टसाधनत्वग्रह इत्याह न चेति । नित्येपि बहुश इति । दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्निति विधेः प्रीत्यात्मकफलश्रवणात् । सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्तेयान्ति ब्रह्मलोकं सनातनमित्यर्थवादात्फलश्रवणाच्चेत्यर्थः । यत्र फलं न श्रूयते तत्र का गतिरित्याह विश्वजिदिति । यथाविश्वजिता यजेतेत्यत्र विश्वजिद्यागस्य स्वर्गः फलं कल्प्यते तथा तत्रापि स्वर्गः फलं कल्पनीयमित्यर्थः । ननु यस्य फले कामना नास्ति तेन तत्राक्रियेतेत्यत आह प्रत्यवायेति । यद्वाधिकारवतोऽकरणेपापमिति कामनाशून्यस्याधिकारिणः सन्ध्यावन्दनाकरणे

पापं नस्यादन्यथा शौचादिशून्यस्याकरणे पापं स्यात् । अतआह । प्रत्य वायेति । एव नित्यस्यापि फलकल्पने । तच्चाकरणे प्रत्यवायजन फत्वरूपं नित्यत्व चाकामेनोपाधिकर्तव्यत्वे कामनाधीनकर्त्तव्यत्वे अन्त मेव अविरुद्धमेव । एवं सन्ध्यावन्दनस्य कामनाधीनकर्त्तव्यत्वे तुष्यतुद न इति न्यायेनाहेष्टत्वादिति ।

नन्वेवं कामनाधिकारिविशेषणं स्यात् । तथा च यदा फले कामना नास्ति तदा पुरुषस्याशुचेरिवान धिकारित्वान्नित्याकरणेपि प्रत्यवायो न स्यादिति चेत् । यदि तत्र प्रत्यवायः प्रामाणिकस्त्यज्यतं तर्हि कामनाधिकारिविशेषणं । न तु वेदबोधितमि ष्टसाधनत्वमपि प्रामाणिकत्वात् । कल्प्यतां व कामनेतरयावदधिकारवतामकरणमेव प्रत्यवायहेतु रिति न किञ्चिदेतत् न च साध्यत्वसाधनत्वयोर्वि रोधः । एकस्मिन्पाके ओदनसाधनत्वकृतिसाध्यत्व योः सत्त्वात् ॥

कथमन्यथा तवेष्टसाधनताज्ञानकालीनं कृति साध्यताज्ञानं पाकादौ प्रवर्तकमिति कृतिसाध्यत्वे च बलवदनिष्टाननुबन्धित्वं विशेषणं देयं । नातो मधु विषसंपृक्तान्नभोजने कृतिसाध्यत्वेन सुखसाधत्वेन ज्ञातेऽपि प्रवृत्तिर्बलवदनिष्टानुबन्धीत्वेन ग्रहात् । यदा च बलवदनिष्टाननुबन्धित्वेन ज्ञायते तदा प्रव र्तत एव । एवं च बलवदनिष्टाननुबन्धीष्टसाधन-

**त्वेसति कृतिसाध्यत्वविषयकं ज्ञानं प्रवर्तकं । विध्यर्थोऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वेसति कृतिसाध्यत्वम् ॥**

एवं सन्ध्यावन्दनादौ कामनाशून्यस्य प्रवृत्त्यभावे इष्टापत्तौ ॥ तर्हि किमनिष्टमत आह तथा चेति । इदमुपलक्षणं अनधिकृतकर्त्तव्यत्वेन कामनाकृतमपि नित्यं निःफलं स्यादित्यपि बोध्यं । त्यज्यत इति । नित्यस्थल इति शेषः । तथाचकामनाया अधिकारिविशेषणत्वत्यागे कामनाशून्यस्य सन्ध्यावन्दनाभावे प्रत्यवायो भवत्येवेति भावः । नन्विनश्च त्यज्यतामिष्टसाधनत्वस्य विध्यर्थत्वं तथा च नित्ये फलकल्पनाभावे काम्यत्वाभावात्कामनाधीनकर्त्तव्यत्वे कामनाचनाधिकारिविशेषणमिति कामनाशून्यस्याकरणे प्रत्यवायो भविष्यत्येवेत्यत आह नन्विति । त्यज्यत इत्यनुषज्यते । प्रामाणिकत्वात् ननु त्यागस्यावश्यकत्वे इष्टसाधनत्वमेव त्यज्यतां । तथा च वेदेन बलवदनिष्टाननुबन्धिकृतिसाध्यत्वमेव बोध्यते । न नु नित्यादौ बाधितेष्टसाधनत्वमपि तदुक्तं । न हि बाधितमर्थं वेदोऽपि ब्रूत इति । दधाद्दहरहः श्राद्धमित्याद्यर्थवादादेस्तावकत्वमात्रं नत्विष्टसाधनत्वबोधकत्वमत आह कल्प्यतामिति । कामनेतरशौचाद्यधिकारस्तत्र भवत्येवेति भावः । ननु यदि वेदबोधितेष्टसाधनत्वं न त्यज्यते तर्हि कामनाशून्यकृतसन्ध्यावन्दनादेः कथं फलजनकत्वं । अन्यथाकामनाशून्यकृतकर्मणः कायव्यूहादिना प्रारब्धकर्मभुञ्जानस्य मुमुक्षोर्योगिनोऽपि फलं स्यात् । इष्टापत्तौ तेषां मोक्षो न स्यात् । यदि तादृशकर्मणो न फलजनकत्वं तदा तद्बोधक वेदाप्रामाण्यापत्तिरित्यभिसन्धायाह नाकिञ्चिदिति । अयमर्थः। यथा क्षेत्रमध्ये पतितसलिलसहित बीजस्याङ्कुरजनकत्वेपि शिलाशकले नाङ्कुरजनकत्वं तथा तत्वज्ञानाभावस्यापि कारणत्वात् । अथ कामनाया अधिकारणत्वं । इत्थं च कामनाशून्यास्मदादिकृतसन्ध्यावन्दनस्य यज्ञादेरपि फलजनकत्वापत्तिः । न

खलु कारणान्तराभावे सति यत्किञ्चित्कारणात्कार्यमिति वेदोऽपि ब्रूते । अथ साध्यत्वसाधनत्वयोरेकसमयावच्छेदेन विरोधेपि भिन्नकालावच्छेदेन तयोरविरोधात तथा च कपालं घटवद् घटप्रागभाववदिति वत्पाकः कृतिसाध्यः ओदनसाधनमिति ज्ञाने बाधकाभावादित्यभिप्रायवान्समाधत्ते एकस्मिन्निति । सत्त्वात् । भिन्नकालावच्छेदेन सत्त्वात् । सम्भवादिति पाठे भिन्नकालावच्छेदेन सम्भवात ।

अस्वीकारे बाधकमाह कथमिति । इदमुपलक्षण नवमते लिङ्पदिहतलैङ्गिकभानस्य व्यवस्थापितत्वान्मत्कृतिसाध्यत्वव्याप्यमत्कृतिंविना मत्त्वेसति मदिष्टसाधनत्ववान्पाकः कृतिसाध्य इति कथमनुमितिः । कथं वा कृतिसाध्यत्वतादृशेष्टसाधनत्वयोः सामानाधिकरण्याग्रहाद्वा प्रग्रहे तादृशेष्टसाधनत्वेन हेतुना कृतिसाध्यत्वानुमानमिति । उपसंहरति एवं चेति । कृतिसाध्यत्वप्रकारकज्ञानस्यैव कृतिसाध्यत्वप्रकारिकेच्छाया हेतुत्वात्तदिच्छाद्वारैव तादृशज्ञानस्य प्रवृत्तिहेतुत्वे उक्तविनिगमनाविरह इति भावः । ननु तवापिविध्यर्थः क इत्य आह विध्यर्थ इति ।

**अत एव कलञ्जभक्षणस्येष्टसाधनत्वे सति कृतिसाध्यत्वेऽपि बलवदनिष्टाननुबन्धित्वाभावाद्विशिष्टाभावोऽस्तीति न कलञ्जं भक्षयेदिति विध्यर्थनिषेध उपपद्यते कथं तर्हि श्येनेनाभिचरन्यजेतेत्यत्र विधि प्रवृत्तिः । श्येनस्य हिंसात्वेन नरकरूपबलवदनिष्टानुबन्धित्वादिति चेन्न श्येनो हि वधसाधनं न तु नरकसाधनं मानाभावात् । श्येनाद्धवधो वधाच्च नरकमिति न तत्रास्तिकानां प्रवृत्तिः ।**

ननु न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणस्य तृप्तिरूपेष्टसाधनत्वेन कृतिसाध्यत्वेनचेष्टसाधनत्वकृतिसाध्ययोर्निषेधानुपपत्तिरित्यत आह

हात एवेति ॥ अत एव । बलवदनिष्टाननुबन्धित्वस्य विशेषितत्वा-देव तस्य पापरूपबलवदनिष्टानुबन्धित्वे न तादृशेष्टसाधनत्वनिषेधादिति भावः । विशिष्टाभाव इति । यथा पुरुषे सत्यपि दण्डाभावाद्दण्डीपुरुषा-भावः तथेष्टसाधनत्वविशिष्टकृतिसाध्यत्वसत्त्वेपि बलवदनिष्टाजनकेष्ट-साधनत्वविशिष्टकृतिसाध्यत्वाभावस्तस्य पापरूपबलवदनिष्टजनकत्वेन विशिष्टाभावसत्त्वादित्यर्थः ॥ विध्यर्थनिषेधः तादृशकृतिसाध्यत्वरूप-विध्यर्थनिषेधः । अथ बलवदनिष्टाननुबन्धिविशेषणादाने विध्यर्थानुपपत्ति शङ्कते कथमिति श्येनेनाभिचरन्यजेतेत्यनेन श्येनस्याभिचाररूपफलजनकत्व बोधकत्वं तत्र "नाभिचरेति वै" इति श्रुत्याभिचारनिषेधो बोध्यते न तु श्येननिषेधः । इत्थ च स्वर्गकामोऽश्वमेधेन यजेतेत्यत्र यथा स्वर्गः फलं तथात्राप्यभिचारः फलमिति न श्येनविध्यर्थबाध इत्यभिप्रायवानाशङ्का-धत्ते श्येनो हीति । विध्यर्थस्त्वनिष्टाजनकत्व वधस्यानिष्टभिन्नत्वेन श्येने-ऽप्यस्तीति भावः । साक्षान्नरकसाधनत्वाभावं दर्शयति । श्येनात्त्विति । न तत्रेति साक्षान्नरकसाधनत्वाभावेपि परम्परया नरकसाधनत्वादास्तिकानां श्येने न प्रवृत्तिरिति भावः ॥

नन्तु श्येनो मरणानुकूलव्यापारत्वेन हिंसा । सा च नरकजनिकेति चेन्न । न हि मरणानुकूलव्यापारमात्रं हिंसा कूपादौ विनष्टे गवि तत्कूपकर्त्तुर्गोवधकर्तृत्वप्रसङ्गात् । नापि मरणोद्देशेनानुष्ठीयमानत्वे सतीति विशेषितं न हि तद् गोमरणमुद्दिश्य कृतमिति न तत्कर्तुः गोवधकर्तृत्वमिति गङ्गामरणमुद्दिश्यकृतत्रिसन्ध्यस्तवपाठादेरपि तत्वापत्तेः । अदृष्टाद्वारामरणानुकूलत्वं विवक्षितमिति चेन्न । तर्हि

कथं श्येनस्य हिंसात्वमिति । नव्यास्तु बलवदनिष्टाननुबन्धीष्टसाधनत्वेसति कृतिसाध्यताज्ञानत्वेन हेतुत्वं कृतिसाध्यत्वेसति बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानत्वेन बलवदनिष्टाननुबन्धीकृतिसाध्यत्वेसति इष्टसाधनताज्ञानत्वेन वेत्यत्र विनिगमनाविरहः । अस्तु तेनापि रूपेण हेतुत्वमिति चेत् । तर्हि कार्यताज्ञानत्वादिनैव हेतुत्वमस्तु लाघवात् ।

नन्विति । न चाव्यवधानेन मरणानुकूलो व्यापारो हिंसा श्येनस्य तादृशत्वाद्धिंसात्वमित्याह नापीति । तत् । मरणानुकूलव्यापाररूपहिंसास्वरूपं तथा च सत्यन्तविशेषणविशिष्टं तादृशव्यापारस्वरूपं हिंसेत्यर्थः । तत्वापत्तिः हिंसात्वापत्तिः । निरुक्तहिंसात्वस्य खनवपाठेपि सत्त्वादित्यर्थः । नन्वदृष्टाद्वारकमरणोद्देश्यकमरणानुकूलो व्यापारो हिंसा खनवपाठादेस्तु अदृष्टद्वारकमरणजनकत्वेन न दोष इत्याहादृष्टाद्वारेति तर्हीति श्येनस्यादृष्टद्वारकमरणजनकत्वान्न हिंसात्वमित्यर्थः । नन्वेवं सत्यन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणो ब्रह्महत्त्व नस्यादिति चेन्न भवत्येवअत एव तदुद्देश्यकृतप्रायश्चित्तार्द्धं प्रायश्चित्तमिति । विनिगमनाविरह इति । तथा च कार्यकारणभावत्रयाणामिति भावः । तेन रूपेण बलवद निष्टाननुबन्धीष्टसाधनत्वेसति कृतिसाध्यताज्ञानत्वादिरूपेण कार्यत्वादिनेति । कृतिसाध्यताज्ञानत्वादिरूपेण कार्यत्वादिनेति । कृतिसाध्यताज्ञानत्वेन बलवदनिष्टाननुबन्धित्वज्ञानत्वेनेष्टसाधनताज्ञानत्वेन वा हेतुत्वमित्यर्थः । लाघवात् । कारणतावच्छेदके लाघवात् ।

वस्तुतस्तु कृतिसाध्यताधीत्वेनैव चिकीर्षां प्रति हेतुत्वं । नन्वेवमिष्टाजनके चिकीर्षा स्यादिति

चेत् । सुखादाविष्टाजनकत्वेन ज्ञाते मण्डलीकरणादौ चिकीर्षा स्यादिति चेन्न उपायेच्छासामान्यसामग्र्यभावात् केयमुपायेच्छासामग्रीति चेदिष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं बलवदनिष्टसाधनताज्ञानं वा प्रतिबन्धकं इष्टसाधनत्वं च विद्यमानेच्छाविषयोयस्तत्साधनत्वं इच्छाविषयत्वं च स्वरूपसद्विशेषणं न तु तस्यापि ज्ञानं कारणं । एवं च सुखादाविव पाकादौ सुखसाधनताधीस्तदापाकादाविच्छेति ध्येयम् । विध्यर्थोऽपीष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाजनकत्वं च न तु विशिष्ट विशेषणविशेष्यभावे विनिगमनाभावात् न कलञ्जं भक्षयेदित्यत्र च कृतिसाध्येष्टसाधनत्वयोर्न तथान्वयस्तस्य कार्यत्वादिष्टसाधनत्वाच्च किं तु बलवदनिष्टाननुबन्धित्वस्य श्येनेनाभिचरन् यजेतेत्यत्र बलवदनिष्टाननुबन्धित्वस्य नान्वयबोधात् इष्टसाधनत्वकृतिसाध्यत्वयोस्त्वन्वयः स्यादेवाबाधादिति संक्षेपः।

अथ ज्ञानस्यप्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति नन्व कृतिसाध्यताज्ञानत्वेनहेतुता नत्विष्टसाधनताज्ञानत्वेन व्यभिचारात् तथाहि । यत्रेष्टसाधनताज्ञानन्ततो यागे कृतिसाध्यताज्ञानं ततः सिद्धत्वज्ञानं ततश्चिकीर्षा तत्रेष्टसाधनताज्ञानं व्यभिचारि एवं बलवदनिष्टाननुधबन्धित्वज्ञानमपि । न च यत्रादौ कृतिसाध्यताज्ञानं । तत इष्ट साधनताधीस्ततः सिद्धत्वज्ञाननाशस्तत्र कृतिसाध्यताज्ञानमपि व्यभि

च्छारीति वाच्यम् । कृतिसाध्यत्वप्रकारकज्ञानं विना कृतिसाध्यत्वप्रकारकेच्छाया असम्भवादित्यभिप्रायवानाह वस्तुतस्त्विति स्यादेवेति । सुखं नेष्टसाधनमिति ज्ञाने विद्यमानेपि सुखे चिकीर्षा जायत एवेत्यर्थः । चिकीर्षायाः फलोपायोभयविषयत्वादुपायचिकीर्षां प्रतीष्टसाधनताज्ञानस्य हेतुत्वेपि न चिकीर्षात्वावच्छिन्नं प्रति हेतुत्वं फलचिकीर्षायां व्यभिचारादिति भावः । उपायेच्छेति । मण्डलीकरणगोचरचिकीर्षानुपायेच्छा तत्र त्विष्टसाधनताज्ञानादेरपि हेतुत्वेन तदभावादेव न चिकीर्षेति भावः । अस्यान्तिममाह बलवदनिष्टसाधनेति । विद्यमानेच्छेति विद्यमानो य इच्छाविषयस्तत्साधनत्वस्य ज्ञानं न कारणं कालान्तरे फलं भविष्यतीति ज्ञानादप्यन्नभोजनादौ प्रवृत्तेः । किन्तु विद्यमाना या इच्छा तद्विषयसाधनताज्ञानं कारणं । तथा च तदानीमोदनेच्छाया अभावात् । सिद्धौदने न प्रवृत्तिरित्यभिसन्धाय विद्यमानेत्युक्तं । इच्छाविषयत्वं विद्यमानेच्छाविषयत्वं । नत्विति । गौरवादिति भावः इच्छा चिकीर्षा । तथा च विध्यर्थः क इत्यत आह । विध्यर्थो पीति । ननु विशिष्टस्य कारणत्वाभावे न कलञ्जं भक्षयेदित्यत्र कथं विध्यर्थे नञर्थान्वय इत्यत आह न कलञ्जमिति तस्य कलञ्जभक्षणस्य किन्त्विति कलञ्जभक्षणस्य नरकसाधनत्वेन बलवदनिष्टजनकत्वादिति । इत्थं च श्येनेनाभिचरन्यजेतेत्यत्रेष्टसाधनत्वकृतिसाध्यत्वरूपविध्यर्थान्वयेपि न बलवदनिष्टाननुबन्धित्वान्वय इत्याह । श्येनेति । इष्टेति शत्रुमरणरूपेष्टसाधनत्वात्कृतिसाध्यत्वाच्च श्येनस्येत्यर्थः ॥

सोयं विधिस्त्रिविधः अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति तदुक्तं विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते इति उदाहरणानि व्रीहीन्प्रोक्षति

व्रीहीनवहन्ति पञ्चपञ्चनखाभक्ष्या इत्यादि । अत्र
गुरवः नेष्टसाधनत्वं विध्यर्थः स्वर्गकामो यजेतेत्यनेन
विधिना तस्य बोधयितुमशक्यत्वात् तथा हि स्वर्गका
मस्येष्टसाधनं याग इत्यनेन बोध्यम् । इष्टं चात्र
काम्यत्वेनोपस्थितः स्वर्ग एव न चेदं शक्यं साक्षा-
त्साधनत्वस्याशुविनाशित्वेनासम्भवात् । न च पर-
म्परया स्वर्गसाधनत्वं बोध्यं परम्पराघटकापूर्वानु-
पस्थितेः । नापि कार्यत्वं स्वर्गकामिकार्यत्वस्य यागे
बोधयितुमशक्यत्वात् तथा हि शाब्दबोधे योग्यता-
ज्ञानं हेतुः योग्यता चात्रान्वयप्रयोजकरूपवत्त्वं अत
एव सेकान्वयप्रयोजकं द्रवद्द्रव्यत्वं जलेस्तीति तद्यो
ग्यं वह्नौ च तन्नास्तीति तदयोग्यं प्रकृते च कामि-
कार्यत्वान्वये इष्टसाधनत्वमन्वयप्रयोजकं न च
तद्गृहीतुं शक्यमित्युक्तं अन्वयप्रयोजकस्य साधन-
त्वस्य विरहात् तस्मात्कार्यमपूर्वमेव विध्यर्थस्तस्मिं-
श्च यागस्य विषयतयान्वयः ।

निरुक्तविधेस्त्रैविध्यमाह । अपूर्व इति । अत्यन्ताप्राप्तत्वे सति
विधायकत्वमपूर्वविधित्वं पक्षे प्रकारान्तरेणाप्राप्तत्वे सति अप्राप्तपक्षान्तर-
विधायकत्वं नियमविधित्वं सर्वत्र प्राप्तत्वे सत्यन्यतो निवृत्त्यर्थमंशे विधाय-
कत्वं परिसंख्याविधित्वमिति तदेवाह विधिरिति । अत्यन्ताप्राप्तप्रापण
इह विधिर्वेदवाक्यं सोऽपूर्वविधिः । पाक्षिके सति पक्षान्तरेण प्राप्तौ सत्या
नयमो नियमविधिः । तत्र वैधप्राप्तौ अन्यत्र रागतः प्राप्तौ

परिसंख्याविधिः परिकीर्त्त्यत इत्यर्थः । उदाहरणानि क्रमेणेति पूरणी
अपूर्वविधेरुदाहरणमाह । व्रीहीन्प्रोक्षतीति प्रोक्षणस्य संस्कारविशेषजन
कत्वं तच्च विनाविधिङ्कथमपि प्रमाणान्तरेण न प्राप्येतेत्यर्थः । नियम
विधेरुदाहरमाह व्रीहीनवहन्तीति अवहननेन वितुषीभावस्य नखनिर्द
तनेनापि प्राप्तत्वादित्यर्थः परिसंख्याविधेरुदाहरणमाह पञ्चेति । पञ्च
नखा येषां ते पञ्चनखाः । भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लक
शशकश्चेति वचनात्सेधादयः पञ्च भक्ष्याः । पञ्चनखानां मध्ये मार्ज
रवानरादीनामन्येषां च भक्षणे प्राप्ते सति एतेषामेव विधानमित्यर्थ
यथा वा "इमामगृभ्णन् रशनामृतस्येत्यनेन मन्त्रेणाश्वाभिधान्या ग
र्दभाभिधान्याश्च रशनाया ग्रहणे पुनरश्वाभिधानीमादत्त इत्यनेनाश्व
भिधान्यामेवप्राप्तायाङ्गर्दभाभिधानी निवर्त्तत इति । ननु त्रिविधविधिन
पीष्टसाधनत्वं यागे बोध्य तच्च न सम्भवति । यागस्याशुतरविनाशित्वेन
ष्टाव्यवहितपूर्ववर्त्तित्वरूपकारणत्वस्य ज्ञातुमशक्यत्वात् । नचापूर्वद्वारे
ष्टसाधनत्वं ज्ञेयमिति वाच्यम् । अपूर्वस्यापकाभावात्तथा च विधेरि
ष्टसाधनत्व न शक्यमित्येवोच्यतामित्यभिप्रायवानाह नेष्टसाधनत्व
मिति । तस्य इष्टसाधनत्वस्य इष्टसाधनत्वस्य विध्यर्थत्वे स्वर्गकामे
यजेतेत्यनेन स्वर्गकामस्येष्टसाधनं यागादि इति बोध्य । तच्च न संभव
यागस्याशुतरविनाशित्वेन साधनत्वस्य बोधयितुमशक्यत्वादित्याह स्वर्ग
कामस्येति । यद्वा गुरुपरम्परया विधिसमभिव्याहृतस्वर्गकामो यजेतेत्यादि
वाक्यस्य प्रवर्त्तकत्वमवगम्यते तच्चैतद्वाक्यस्य प्रवर्त्तकत्वज्ञानजनकत
सत्येव संभवति । प्रवर्त्तकं च ज्ञान यागादिविशेष्यकमिष्टसाधनत्वप्रकार
स्वर्गकामस्येष्टसाधनं याग इति तच्च तस्याशुतराविनाशित्वेन न सं
भवतीत्याह स्वर्गकामस्येति । नन्विष्टमपूर्वं तच्च यागाव्यवहितोत्तरक्ष
णेवोत्पद्यते तत्साधनत्वमाशुतरविनाशिनोऽप्यक्षतमेवेत्यत आहेष्टञ्चेति
कामनाविषयस्तु स्वर्ग एव नापूर्वमिति भावः । इत्थ च कालान्तर

भाविनः साधनत्वं कथमाशुतरविनाशिनि शक्त्या बोध्यमित्याह न चेदमिति । इदं साधनत्वं । नन्वपूर्वसम्बन्धेनाव्यवहितपूर्ववृत्तित्वरूपस्वर्गसाधनत्वं यागे बोध्यमित्यत आह न चेति । परम्परया स्वजन्यापूर्वसम्बन्धेन । अथैवमिष्टसाधनत्वरूपाया अन्वयप्रयोजकरूपयोग्यताया यागेऽभावात्कार्यत्वान्वयो न यागक्रियायामित्यभिप्रायवानाह नापीति । अत्रायं गुरूणामाशयः कालान्तरभावि स्वर्गादिफलकामसमभिव्याहृतवैदिकविधिप्रतिपाद्यप्रवर्त्तकज्ञानप्रकारीभूतो धर्मः समभिव्याहृतक्रियान्वयी न वेति विप्रतिपत्तिः स च धर्मो गुरुनये न्यायनये च कार्यत्वमेव तच्च कार्यत्वं न्यायनये यागादिरूपक्रियान्वयि प्राभाकरमते त्वपूर्वान्वयीति विवेकः । अत्र पापक्षयकामो गङ्गां स्नायादित्यादौ पापक्षयकामीयगङ्गाकर्मकं स्नानं कार्यमिति कार्यत्वस्य स्नानरूपक्रियान्वयित्वांशतः सिद्धसाधनवारणाय कालान्तरभावीति । सन्ध्यामुपासतेत्यादौ सन्ध्योपासनं कार्यमिति बोधे सन्ध्योपासनक्रियायां कार्यत्वान्वयादंशतःसिद्धसाधनवारणाय कामेति पचेतेत्यादौ पाकः कार्यं इति बोधे पाके कार्यत्वान्वयादंशतस्तद्वारणाय वैदिकेति । अपूर्वस्यापि यागरूपक्रियान्वयित्वे प्राभाकरमते बाधवारणाय प्रवर्त्तकेति । तथा च तस्य कार्यत्वस्येष्टसाधनत्वरूपयागान्वयित्वं वाच्यं तच्च न सम्भवति इष्टसाधनत्वस्याशुविनाशिनि यागे ग्रहीतुमशक्यत्वात् स्वर्गकामिकार्यत्वस्य स्वर्गकामिकृतिसाध्यत्वस्य अत एव ईदृशयोग्यताया विरहादेव । स्वर्गकामो यजेतेति शब्दश्रावणात्तादृशविधिसमभिव्याहृतवाक्यं स्वर्गादिप्रवृत्तिजनकज्ञानजनकमिति तात्पर्यमवगतवतः कार्यत्वान्वये योग्यताविरहादनुपपत्तिज्ञानवतः कार्यस्वरूपेणापूर्वरूपे कार्ये विधेः शक्तिमवगतः पुरुषस्य कार्यत्वेनोपस्थिते कार्ये यागप्रकारकं यागविषयकं कार्यमित्येतादृशान्वयबोधो भवत्येवेत्यभिप्रायवानुपसंहरति । तस्मादिति । अपूर्वरूपं कार्यमेव विध्यर्थः । एवकारेण कार्यत्वव्यवच्छेदः । तस्मिन्निति धात्वर्थ-

प्रकारकबोधे संख्याकालादिभिन्नत्वे सति विशेष्यतासम्बन्धेनाख्याता प्रत्ययजन्योपस्थितिः कारणं धात्वर्थस्य प्रकारताजन्यत्वरूपविषयतास न्धेन तथा च यागजन्य कार्यमिति बोध इत्यर्थः ॥

नन्वपूर्वस्य पूर्वमनुपस्थितत्वात्तत्र शक्तिग्र ऽनुपपन्नः । अथ कार्यत्वेन कार्यसामान्य एव शक्ति ग्रहे योग्यताबलाच्चापूर्वव्यक्त्योर्लाभः न हि यागा दयकमन्यत्कार्यं सम्भवतीति चेन्न स्वज्ञानादेरपि : म्भवात् । उच्यते कार्ये तावत्स्वर्गकामान्वयी नियोज नियोजकभावलक्षणः तत्र कामी नियोज्यो नियोज च कार्यं अतः कार्ये नियोजकत्वेनैव स्वर्गकामस्य न्वयः नियोजकत्वं च तत्कामिकार्यतया प्रतीयम नत्वं । अत्र चान्वयप्रयोजकं काम्यसाधनत्वं न । कामी काम्यादन्यत्काम्यसाधनत्वेन ज्ञातं कार्यत वेति । नच काम्यासाधनं काम्यसाधनत्वेन ज्ञाय अन्यथाख्यातेरनभ्युपगमात् । न च ज्ञानं काम्यस्वर्गस घनं सम्भवतीत्यतो योग्यताबलाद्यागविषयकं क स्वर्गकामीयं स्वर्गकामो यागविषयककार्यवानित्ये वानुभवो भवन् योग्यतया ऽपूर्वमवलम्बते एवं काम्ये क्रमशक्तिलिङ्नित्ये निषधेपि विधेरपूर्वमा लोके च यत्रेत्यादावपूर्वे तात्पर्यासम्भवात्कार्य लक्षणेत्याहुः ।

नन्वपूर्वानुपस्थितौ लिङस्तत्र कथं शक्तिग्रहः । उपस्थिते च तस्मिंस्तद्द्वारैव यागस्य स्वर्गसाधनत्वग्रहे गतमपूर्वस्य वाच्यत्वप्रत्याशयेत्यभिप्रायवानाह नन्विति मणिकारमतमाहार्येति तथा च कार्यत्वेन शक्तिग्रहः कार्यं च घटादिरूपं पूर्वमुपस्थितमेवेत्यर्थः । ननु कार्यत्वेन रूपेण किमपूर्वे शक्तिरुत घटादौ किमुभयत्र वा नाद्यः प्रथममपूर्वस्यानुपस्थितेः। अत एव नान्त्योपि नापि द्वितीयः। अन्यशक्तिग्रहस्यान्यत्राप्रयोजकत्वादित्यत आह योग्यतेति । अयमर्थः। कार्यशक्तो लिङ्प्रत्यय इति शक्तिग्रहो घटादिकमादायैव ततो घटादिविषयकमेव कार्यत्वेन रूपेण कार्यमिति स्मरणं ततो योग्यतावलाद्घटादिकं विहाय यागविषयकं कार्यमित्यनुभवोनुभवत्वपूर्वमालम्बते तथा च येन रूपेण शक्तिग्रहस्तेन रूपेण पदार्थोपस्थितिस्तेन रूपेण शाब्दबोध इति नियमेपि क्षतिविरहादिति ॥ ननु कार्यत्वेन रूपेण घटादौ शक्तिग्रहे घटादीनामेव कुतो न लाभ इत्यत आह नहीति। ननु यागविषयकयागादिज्ञानरूपमन्यत्कार्यं सम्भविष्यतीति किमपूर्वेणेति दूषयति स्वज्ञानादेरिति स्वं यागः तथा च यागधीरेव सेत्स्यतीति क्वापूर्वसिद्धिरिति भावः । प्राभाकर, स्वस्य रहस्यमाहोच्यत इति। अथ काम्यसाधनताधीजन्यं ममेदङ्कार्यमिति ज्ञानवतो यागविषयकं स्थायिकार्यमिति प्रथमो बोधः । ततो नियोज्यनियोजकभावसम्बन्धेन कामनावतः पुरुषस्य कार्यान्वयस्तथा हि । स्वर्गकामस्य नियोज्यत्वेन स्थायि कार्यान्वयं विना तादृशकार्ये स्वर्गसाधनत्वालाभः । स्वर्गकामकृतिसाध्यस्य स्वर्गसाधनत्वात् नियोज्यत्वेनान्वये स्वर्गसाधनत्वयोग्यत्वाच्च योग्यतायाः स्वर्गसाधनत्वान्वयलाभाय नियोज्यान्वय आवश्यकः नियोज्यत्व कामनावतो ममेदं कार्यमित्यवगमकत्वं । नियोजकत्वं च कामिकार्यतया प्रतीयमानत्वं तथा च यागविषयकस्वर्गकामनियोज्यकं स्थायिकार्यमिति द्वितीयो बोधः । ततो यागे काम्यसाधनत्वज्ञानमन्तरेण कामिकृतेर्यागविषयकत्वमनुपपन्नं काम्यसा

धनत्वेन ज्ञायमान एव कार्यताज्ञानद्वारा कामिनः कृत्युत्पत्तेः कामिकृते- र्यागविषयकत्वमन्तरेण कामिकृतेरपूर्वविषयकत्वमनुपपन्नं कृत्यन्तराद- पूर्वानुपपत्तेरित्यनुपपत्तिप्रतिसन्धानसहितेन शब्दात्मकोपादानेन यागे काम्यसाधनत्वबोधात्तदनन्तरङ्काम्यसाधनं यागः स्वर्गकामनियोज्यकः स्वर्गकामकृतिसाध्य इत्यौपादानिकस्तृतीयो बोधः । ततो मत्कृतिसा- ध्यत्वेन यागोऽवगतः सा कृतिराश्रयं विनानुपपन्नेत्यनुपपत्तिप्रतिसन्धान सहितेन शब्देन स्वर्गकामो यागानुकूलकृतिमान् इत्यौपादानिकश्चतुर्थो बोधः । तथापि प्रवर्त्तकज्ञानालाभ. । प्रवर्त्तकधीद्वारैव प्रवृत्तिपरं वाक्यं प्रवृ- त्तिजनकमिति स्वर्गकामस्य यागः कृतिसाध्योऽहमपि स्वर्गकाम इति युक्तिप्रतिसन्धानसहकृतेन शब्देन यागो मत्कृतिसाध्य इति पञ्चमो बोध इत्येकं मतं तत्र द्वितीयबोधाभिप्रायेणाह । कार्यं तावदिति । यद्वा स्व- कामो यजेतेति वाक्यात्स्वर्गकामस्य यागविषयकं कार्यमिति प्रथमो बोधः । तत्र षष्ठ्यर्थो ममेदङ्कार्यमित्यवगमस्वरूपं नियोज्यत्वं स्वर्ग- स्तथा चायमेव नियोज्यत्वेन स्वर्गकामस्यापूर्वेऽन्वयः एवं च स्वर्गका- मकार्यत्वं स्वर्गकामकृतिसाध्यत्वं यागस्य स्वर्गकामकृतिसाध्यत्वमन्तरेणा- नुपपन्नमित्यनुपपत्तिप्रतिसन्धानेन प्रतीतापूर्वद्वारा च काम्यसाधनत्वज्ञाने ममेदं कार्यमित्यवगमवतः स्वर्गकामस्य यागः स्वर्गसाधनत्वेन ज्ञाय- मानं कार्यमिति द्वितीयो बोधः । तदनन्तरम् । कृतिसाध्यत्वेन यागे- ऽवगतः सा कृतिर्विनाश्रयं नोपपद्यत इति ज्ञाने स्वर्गकामः स्वनियोज्य कयागानुकूलकृतिमानिति तृतीयो बोधः । तदनन्तरमधिकारिभिन्नो न कर्त्तेति न्यायात् स्वर्गकामस्यावगतं कर्तृत्वं तच्च फलभागित्वरूपाधिका- रित्वमन्तरेणानुपपन्नमित्यनुपपत्तिज्ञाने स्वर्गकामो यागजन्यफलवानिति चतुर्थोऽधिकारित्वबोधः । ततः प्रवृत्तिपरं वाक्यं सम्बन्धबोधकत्वमन्त- रेणानुपपन्नमित्यनुपपत्तिज्ञाने स्वर्गकामस्य यागः कार्यः स्वर्गकामो यागस्य कर्त्ताहमपि स्वर्गकाम इति यागो मत्कृतिसाध्योऽहं च तत्कर्ता तदधिकारी

चेति प्रवर्त्तकः पञ्चमो बोधः । तत्र प्रथमबोधाभिप्रायेण भूमिकामारचयते कार्ये तावदिति अन्वयः सम्बन्धः ॥ नियोज्यो ममेदं कार्यमित्यवगतस्वस्वरूपनियोज्यत्ववान् अतः कामिनो नियोज्यरूपत्वात्कार्यस्य नियोजकरूपत्वाच्च । तत्कामिकार्यतया स्वर्गादिकामनावतः कार्यं तया पूर्वोनुपस्थितापूर्वे शक्तिग्रहानुपपत्त इति पूर्वोक्तदोषमुद्धरति अत्रेत्यादिना अत्र नियोज्यत्वेन कामिनः कार्यान्वयो अन्वयप्रयोजकं ॥

अन्वयप्रयोजकस्वरूपं योग्यत्व काम्यसाधनत्व स्वर्गादिसाधनत्वं तच्चापूर्वे न तु यागादाविति भावः ॥ ननु लिङो यदि कार्यत्वेन रूपेण घटादिसाधारणकार्ये शक्तिस्तर्हि कामिनो घटादावन्वयेपि काम्यसाधनत्वरूपमन्वयप्रयोजकरूपं घटादावपि भविष्यतीत्याशयेनाह नहीति कामिनः प्रवृत्तिजनिका या कर्त्तव्यताधीस्तस्याः काम्यभिन्नो यो विषय स काम्यसाधनत्वेनाज्ञात कर्त्तव्यतया न जानातीत्यर्थः ॥ काम्यभिन्नसन्ध्यावन्दनादिकं काम्यसाधनत्वेनाज्ञातमपि कर्त्तव्यतया जानातीति तत्र व्यभिचारवारणाय कामीत्युक्त । सुखे दुःखाभावरूपे च काम्ये व्यभिचारवारणाय काम्यादन्यदित्युक्तं । न्यायनये काम्यसाधनत्वेन ज्ञाते काम्यसाधने व्यभिचारवारणाय ज्ञातमिति । तथा च कामी काम्यादन्यत्काम्यसाधनत्वेन ज्ञातमेव कर्त्तव्यतयाऽवैतीति व्याप्तिरपि सूचितेति भावः । ननु घटादावपि काम्यसाधनत्वभ्रमसंभवाद्घटादिकमेव यागविषयक कार्यं भविष्यतीत्यत आह । न चेति कुत्रा नेत्यत आहान्यथाख्यातेरिति अन्यथाख्यातिर्विशेष्यावृत्तिप्रकारकज्ञान तच्च गुरुणा न स्वीक्रियत इति भावः । ननु यागविषयककार्यं यागज्ञानमेव भविष्यतीत्यतआह । न च ज्ञानमिति । तस्याशुतरविनाशित्वादिति भावः । योग्यताबलादित्यस्यापूर्वमालम्बत इत्यनेनान्वयः ॥ योग्यतावलात् काम्यसाधनत्वरूपयोग्यताबलात् । तत्र द्वितीयबोधरूपमपूर्वं प्रमाण दर्शयति यागविषयकमिति । कार्यस्यापिकार्यं स्वर्गकामनियोज्यकं ।

द्वितीयपक्षेति कल्पोक्तचतुर्थबोधरूपं प्रमाणं दर्शयति स्वर्गकाम इति । अनुभवोऽनुभवन् स्वविषयीकुर्वन् । अपूर्वमालम्बते ऽपूर्वरूपं कार्यं साधयति । ननु यदि यागादिसाधारण्येनैव कार्ये शक्तिस्तदा सन्ध्यावन्दनादौ न कलञ्जं भक्षयेदित्यादौ च फलाभावेनापूर्वाभावस्तथा च तत्र सन्ध्योपासनं कार्यमित्यभेदान्वयस्य कलञ्जभक्षणाभावविषयकं कार्यमित्यभेदान्वयबोधस्य च सम्भवेनापूर्वविषयकबोधे मानाभाव इत्य-तआहैवं चेति । काम्ये । काम्यस्थले अपूर्वे क्लृप्तशक्तिः । नित्ये सन्ध्या-वन्दनादौ निषेधे न कलञ्जभक्षयेदित्यादौ लिङ आहेत्यन्वयि तथा च लिङ्त्वेन कार्ये शक्तिकल्पने धात्वर्थनामार्थयोरभेदान्वयस्याव्युत्पन्न-त्वादित्यथानुपपत्त्या नित्यस्थले निषेधस्थले च पाकापूर्वकार्यं स्वीक्रियत एवेति एवं च कलञ्जभक्षणाभावविषयकं कार्यमिति बोधः । नन्वेवं लोके-प्यपूर्वं भासत एवेत्यवोच्यतामित्यत आह लोके चेति । कार्यत्वे लक्षण-लिङ्कार्यत्वे लक्षणा तथा च पाकः कार्यत्ववानिति बोधः ।

अत्रोच्यते कार्यत्व एव विधेःशक्तिर्लाघवान्न तु कार्यत्वविशिष्टे । न च यागे स्वर्गकामकार्यत्वान्वय बोधासम्भवो बाधकाभावात् । न च योग्यताज्ञानवि-रहो बाधकः न ह्यन्वयप्रयोजकरूपवत्त्वं योग्यता सेकानन्वयिनोवादेरपि सत्त्वात् किन्तु प्रकृतसंसर्गवत्त्वं तस्य च संशयसाधारणं ज्ञानं हेतुः । न च यागे स्वर्गकामकार्यत्वस्य संशयो न सम्भवति येनैवं स्यात् यच्चोक्तमिष्टसाधनत्वं विध्यर्थः यागे तस्य लिङा बाधयितुमशक्यत्वादिति तदपि न तस्य बाधका-भावात् उक्तं बाधकमिति चेन्न साक्षात्परम्परात्वं

व्युदस्य साधनतासामान्यस्य लिङा बोधनात् यथा रूपवांश्चैत्र इत्यत्र नीलत्वादीन् व्युदस्य रूपसामान्य ज्ञानं । अथैकविशेषबाधे शाब्दसामान्यज्ञानं तदितरद्विशेषणप्रकारतानियतं यथा घटेन जलमाहरेतेत्यत्र छिद्रेतरत्वेन घटज्ञानमतोऽत्रसाक्षात्त्वबाधे परम्परात्वप्रकारकं ज्ञानं कार्यं तच्च न सम्भवति द्वारानुपस्थितेरिति चेन्न घटेन जलमाहरेत्यत्र हि योग्यतया वस्तुतो यः छिद्रेतरस्तदन्वयो न तु तदितरत्वेन तदुपस्थापकपदाभावात् न च लक्षणया तदुपस्थितिर्मानाभावात् आस्तां वा तत्रापि साक्षादन्यसाधनत्वप्रकारेणैवान्वयः किन्तः छिन्नम् ।

ननु पचेतेत्यादौ कार्यत्वमिष्टसाधनत्वं शक्त्यैव लिङा बोध्यते एवं च स्वर्गकामो यजेतेत्यादावपीष्टसाधनत्वं कृतिसाध्यत्व च लिङा बोध्यत इति नापूर्वे शक्तिः परन्तु साक्षात्स्वर्गसाधनत्वस्य यागे बाधादपूर्वरूपो व्यापारः कल्प्यतामित्यभिप्रायवान्नैयायिकः सिद्धान्तयति यत्रोच्यत इत्यादिना कार्यत्वे कृतिसाध्यत्वे । न त्विति । कार्यत्वविशिष्टे पूर्वे न शक्तिरित्यर्थः । नन्वाशुतरविनाशिनि यागे स्वर्गसाधनत्वबाधात्कथं कार्यत्वान्वयबोध इत्याह न च याग इति । ननूक्तमेव यागे कार्यत्वान्वयोनुपपन्नः इष्टसाधनत्वरूपान्वयप्रयोजकरूपवत्त्वरूपयोग्यताया अभावादित्याह न चेति । सेकान्वयिन इति । अनाप्तोक्तिसमुद्रजलाभिप्रायेण पयसा सिञ्चतीत्यादावपि द्रवद्द्रव्यत्वरूपान्वयप्रयोजकत्वरूपयोग्यतायाः सत्त्वादिति भावः । प्रकृतेति । एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वमित्यर्थः। नचेति । तादृशसंसर्गरूपयोग्यताज्ञानेनैव निर्वाहे नियोज्य-

त्वेन योग्यतावच्छेदकरूपेण ज्ञानं नोपयुज्यत इति नापूर्वं वाच्यमिति भावः । येन तादृशमपवर्गरूपयोग्यताया असंभवेन । एवं स्यादिति । तादृशसंभवे स्वर्गकामिकार्यत्वान्वये इष्टसाधनत्वरूपमन्वयप्रयोजकरूपं वाच्यं । तच्च यागस्याशुतरविनाशित्वेन न संभवतीति विधेः शक्तिरपूर्वे स्यादित्यर्थः । नेष्टसाधनत्वं विध्यर्थ इति पूर्वोक्तमनूद्य दूषयति । यच्चोक्तमित्यादिना तस्य इष्टसाधनत्वस्य । अशक्यत्वादिति यागस्याशुतरविनाशित्वादिति भावः । ननु स्वर्गसाधनत्वं यागे कथं भासते साक्षात्साधनत्वस्य बाधेन परंपराघटकस्य त्वनुपस्थितेरित्यभिप्रायवानाहोक्तमिति व्युदस्या शङ्का । साधनेति । साधनत्वेन रूपेण साधनसामान्यस्य लिङा बोधनादित्यर्थः । तत्र दृष्टान्तमाह यथेति । साधनत्वेन रूपेण साक्षात्साधनस्य बाधात्परंपरासाधनमेव बुध्यते यथा घटेन जलमाहरेत्यत्र सच्छिद्रस्य बाधाच्छिद्रेतर एव घटो भासते । परंपरात्वपूर्वघटितत्वेवेत्याहाथेति एक विशेषबाधे साक्षात्साधनत्वरूपैकविशेषबाधे शाब्दसामान्यज्ञानं विधिपदात्साधनत्वेन रूपेण साधनसामान्यज्ञानं । तदितरेति । बाधितेतर परंपरासाधनत्वरूपविशेषप्रकारतानियतमित्यर्थः । द्वारेति । अपूर्वरूपद्वार घटितपरंपरायाः द्वारोपस्थापकपदाभावादसंभवादित्यर्थः । योग्यतया छिद्रेतरघटस्य जलाहरणयोग्यतया । तदुपस्थापकेति । छिद्रेतरत्वेन घटोपस्थापकपदाभावादित्यर्थः । ननु यथा प्रजपतीत्यत्र लक्षणया बोधितः प्रकृष्टजपत्वेनैव रूपेण बोधस्तथा घटेनेत्यत्रापि घटपदलक्षणयछिद्रेतरत्वेनैव रूपेण घटबोधो भविष्यतीत्यत आह न चेति । तादृशोपस्थितिः । छिद्रेतरत्वेन रूपेणोपस्थितिः । छिद्रेतरत्वेन तात्पर्याग्रहेऽपि घटेनेत्यादितः शाब्दबोधादित्यभिप्रायवान्समाधत्ते मानाभावादिति । साधनत्वेन रूपेण परंपरासाधनत्वस्यैवावगमः यथा घटेन जलमाहरेदित्यत्र घटत्वेन रूपेण छिद्रेतरघटस्यैवावगमः । न तु छिद्रेतरत्वेन रूपेण पदोपस्थितेरभावादित्याशयवानाहास्तांवेति । तत्रापि व्रजेतेत्यत्रापि ।

यथा घटेनेत्यत्र घटपदाद्घटत्वेन रूपेण छिद्रेतरघटस्य भानं तथा विधिपदादपि साधनत्वेन रूपेण परंपरासाधनस्यैव भानमित्यर्थः । किन्छिन्नं । किमस्माकं गतमित्यर्थः ।

अथ योग्यताज्ञानविरहो बाधकस्तथा हि आशुविनाशिनः कालान्तरभाविफलजनकत्वे फलपर्यन्तस्थायिव्यापारजनकत्वमन्वयप्रयोजकं न चेह तथा ज्ञानं सम्भवतीति चेन्न अन्वयप्रयोजकरूपवत्वस्य योग्यतात्वनिरासात् । नन्वेवं कथमपूर्वलाभ इति चेदाशुविनाशिनः कालान्तरभाविफलजनकत्वस्य तत्कालस्थायिभावव्यापारकत्वव्याप्तेः तदुक्तमाचार्यैः चिरध्वस्तं फलायालं न कर्मातिशयं विनेति ।

ननु यदि परंपरासाधनत्वं यागे बुध्यते तर्हि काम्यसाधनताज्ञानजन्यं ममेदं कार्यमिति ज्ञानवता मत्कृतिसाध्यो याग इति बोधो भवितुमर्हति । तत्र योग्यताज्ञानविरहरूपं बाधकमाशङ्कते । अथेति आशुतरविनाशिनः स्यापि व्यापारजनकत्वविरहिणो ज्ञानस्य संस्काररूपफलजनकत्वमतः कालान्तरभावीत्युक्तं । तादृशव्यापारविरहिणो दण्डस्य कालान्तरभाविघटजनकत्वमत आशिवत्युक्तं । इह व्रजेतेत्यादौ । तथा ज्ञानं यागे फलपर्यन्तस्थायिव्यापारजनकत्वज्ञानं । तदुपस्थापकपदाभावादिति भावः । निरासादिति । यागे स्वर्गकामकार्यत्वरूपयोग्यतासंशयसंभवेनान्वयप्रयोजकत्वरूपयोग्यताया निरासादिति भावः । ननु यदितादृशयोग्यताया यागे संभवे स्वर्गकामस्य यागान्वये किमपूर्वेणेत्यत आह नन्विति । अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वं तत्रानन्यथासिद्धत्वस्य नियतपूर्ववृत्तित्वस्यापूर्वमन्तरेणाप्यवगतमिति किमपूर्वकल्पनेनेति भावः । ननु कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कारणताव-

च्छेदकसंबंधेन कारणत्वमवश्यं वाच्यं तथा च सुखात्मकस्वर्गाधि कारणमात्मा तत्रापूर्वघटितपरंपरासंबन्धेनाशुविनाशिनो यागस्य सत्त्वं वाच्य तथापूर्वास्वीकारे न संभवतीत्यभिप्रायवानाहाशुविनाशिन इति। तत्कालस्थायि स्वर्गकालस्थायीत्यर्थः । ननु स्वर्गकाल स्थायी यागध्वंसरूपव्यापारो भविष्यतीति क्वापूर्वलाभ इत्यतआह भावेति । नन्विदमप्रयोजक । ध्वंसरूपव्यापारेणैव निर्वाहादिति चेन्न । भावाभावयोरेकस्मिन्कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वापत्तेः । तदुक्तमिति चिरध्वस्तं अतिपूर्वनष्टं । फलायालं फलजनने समर्थं कर्म यागादि । अतिशयं अदृष्ट विना नेत्यर्थः । तथा च चिरध्वस्त कर्मातिशयरूपव्यापारं विना फलजनने न समर्थमित्यर्थः । इदं तु बोध्यम् । अपूर्वास्वीकारे स्वर्गधाराविच्छेदो न स्यात् नियतपूर्ववृत्तियागरूपकारणस्य सत्त्वात् किं च ब्रह्महत्यादिनापूर्वानुत्पत्तावपूर्वनाशार्थं प्रायश्चित्ते न प्रवर्त्तेत । अपि च । कीर्त्तितयागादपि फलञ्जायेत तथा च "धर्मः क्षरति कीर्त्तनादित्यादिकमपूर्वे मानमिति । ननु यागजन्यापूर्वं सर्वात्मनिष्टवासनानिष्टमेव कल्प्यतामिति चेन्न । व्यापारशून्यात्मनोपि प्रतिनियतस्वर्गभोगः स्यात् तदुक्तमाचार्यैः द्वितीयाद्धेन" संभोगो निर्विशेषाणां । भूतैः संस्कृतैरपि । सम्भोगः प्रतिनियतभोगः । निर्विशेषाणा व्यापार शून्यानाम् । भूतैः भूतभाग्यवद्भिरिति संक्षेपः ।

**भट्टास्तु धर्मिकल्पनातो धर्मकल्पनाया लघुत्वाद्यागादेरेव स्थायित्वं युक्तं न त्वपूर्वं नचैवमिदानीं यागप्रत्यक्षापत्तिः आत्मविशेषगुणानां द्वितीयक्षण एव योग्यत्वादित्याहुस्तन्न । इदानीं न यजेयमिति प्रत्यक्षविरोधात् विधिभिन्नोऽर्थवादः स त्रिविधः गुणवादोऽर्थवादो भूतार्थवादश्चेति तदुक्तं विरोधे**

भट्टास्तु धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात् यागादेरेव स्थायित्वं युक्तं न त्वपूर्वं। न चैवमिदानीं यागप्रत्यक्षापत्तिः आत्मविशेषगुणानां द्वितीयक्षण एव योग्यत्वादित्याहुस्तन्न इदानीं न यजेयमिति प्रत्यक्षविरोधात्। विधिभिन्नोऽर्थवादः स त्रिविधः गुणवादोऽनुवादो भूतार्थवादश्चेति तदुक्तं विरोधे गुणवादः स्यादनुवादोऽवधारिते भूतार्थवादस्तद्धाना-दर्थवादस्त्रिधा मतः। सोऽयं शब्दोऽनित्य उत्पन्नो गकारो विनिष्टो गकार इतिप्रतीतेः। अत्र गुरवः नित्यः शब्दो व्योमैकगुणत्वात्तत्परिमाणवत् नचाप्रयोजकत्वं सोऽयं गकार इति प्रत्यभिज्ञानस्यान्यथानुपपत्तेः। न चायं भ्रमो बाधकाभावात् न चोत्पत्त्यादिप्रतीतिर्बाधिका तस्याभिव्याञ्जकवायूत्पत्त्यादिविषयकत्वादित्याहुस्तन्न। गकारगतत्वेनोत्पत्त्यादिप्रतीतेः। न चासौभ्रान्तिर्बाधकाभावात् प्रत्यभिज्ञानं बाधकमिति चेन्न। अनयैव सा बाधिता किं न स्यात् न ह्यत्र विनिगमकमस्ति। नन्वेवं विनिगमकाभावे विनाशादिप्रत्ययस्यैव कुतोऽबाधितत्वमिति चेन्न। उत्पत्तिविनाशप्रत्यययोरुभयोर्बाध्यत्वकल्पनापेक्षया प्रत्यभिज्ञानमात्रस्य बाध्यत्वकल्पनायां लाघवात्। अन्ये तु विनिगमनाभावादुभयोरेव प्रमात्व

कथमेतदिति चेत् प्रत्यभिज्ञानस्य गत्वावच्छिन्नभेदाभावविषयत्वात् तथा च सति गकारोऽयमिति स्यान्न तु सोऽयमिति चेन्न सोऽयमित्यस्य गत्वावच्छिन्नाभिन्नोऽयमित्यर्थात् गकारोऽयमित्यत्र च गत्वे तद्वृत्तित्वानवगाहनात् तथा च सति तज्जातीयोऽयमिति स्यादिति चेन्न गत्वे जातित्वानवभासादित्याहुः । भट्टास्तु-शब्दो नित्यो निःस्पर्शद्रव्यत्वादात्मवदित्याहुः तदपि नोक्तदोषात् शब्दस्य द्रव्यत्वे मानाभावाच्च । शब्दो द्रव्यं साक्षात्सम्बन्धेनेन्द्रियग्राह्यत्वाद्घटवदिति चेन्न अप्रयोजकत्वात् शब्दस्य नीरूपद्रव्यत्वेन बहिरिन्द्रियाग्राह्यत्वापत्तेः ॥

ननु क्लृप्तकारणीभूतयाग एव स्थायी स्वीकार्यो लाघवादिति भट्टमतमाह भट्टास्त्विति । तत्पूर्वमिति स्वीकार्यमिति शेषः युक्तमिति वानुषञ्जनीयं । एव यागस्य स्थायित्वे । इदानीमिति । यागस्य विद्यमानत्वे यागाभावस्याभावे यागाभावप्रत्यक्षं न स्यादिति भावः । विधिस्वरूपकथनपूर्वकमर्थवाद विभजते विधिभिन्न इति गुणवादेति विरोधकथनपूर्वकातिशयबोधकपदकदम्बत्वं गुणवादत्वं यथादित्यो यूप इत्यत्र यूप आदित्याभेदो विरुद्धस्तत्रादित्यवद्रूपातिशयलक्षणो गुणो बोध्यत इति । ज्ञातार्थज्ञापकत्वमनुवादत्वं यथाग्निहोत्रं जुहुयादित्यनेन होमे ज्ञाते दध्ना जुहोतीत्यत्र जुहोतिना होमज्ञापकत्वं । यथावाग्निर्हिमस्य भेषजमित्यादौ प्रत्यक्षज्ञातार्थज्ञापकत्वं । विरोधावधारणोभयविधिभिन्नवाक्यबोध्यत्वं भूतार्थवादत्वं यथा वायुर्वैक्षेपिष्टेत्यादि । यन्न दुःखेन संभिन्नमित्यादि वा अत्र स्वर्गपदवाच्यताविरोधावधारणोभ-

याभावात् । नन्वादौ वाक्यार्थज्ञानं तेन पदघटितं वाक्यं जन्यते ततः पदज्ञानपदार्थोपस्थितिः शाब्दप्रमितिस्तत्कारणत्वेन शब्दस्य प्रमाणत्वमुक्तं तच्च न संभवति वर्णानां नित्यत्वेन वाक्यार्थज्ञानजन्यत्वस्य बाधितत्वादित्यत आह सोऽयमिति । अत्र वर्णा नित्या न वेति विप्रतिपत्तौ । शब्दो वर्णात्मकः शब्दः अन्यथा ध्वन्यात्मकशब्दस्य गुरूणाप्यनित्यत्वस्वीकारेणांशतो बाधापत्तेः । व्योमघटसंयोगे व्यभिचारवारणायैकेति । गुणत्वपदं स्वरूपासिद्धिवारणाय । अन्यथा नित्यत्वानुमानस्याप्रयोजकत्वे तथाचैकैका एव गकारककारादिव्यक्तय इति हृदयम् । न च तथापि घटादिवत्स्थिरत्व शब्दस्य प्रत्यभिज्ञया सिद्धं न नित्यत्वमिति वाच्यम् पश्चा नाशकाभावेन नित्यत्वस्य पर्यवसानात् । तदुक्तं । "तावत्कालस्थिरं चैनं कःपश्चान्नाशयिष्यती"ति । अथ प्रत्यभिज्ञारूपः । शब्दे नित्यत्वबाध सम्भवेन अप्रयोगादित्याह बाधकेति । ननूत्पन्नो गकारो विनष्टो गकार इति प्रतीतिरेवबाधिका भविष्यतीत्याह । न चेति । तस्याः प्रत्यभिज्ञायाः । व्यञ्जकेति । वर्णानामभिव्यञ्जनको यो वायुस्तदीयोत्पत्तिरुत्पन्नोगकार इति प्रतीतिविषयः । एवं तदीयविनाशो विनष्टो गकार इति प्रतीतिविषय इत्यर्थः । उत्पत्त्यादिविषयत्वात् । उत्पत्त्यादिप्रतीतिविषयत्वात् । गकारगतत्वेनेति । उत्पन्नो गकार इत्यादौ गकारनिष्ठमुत्पत्त्यादिकं प्रतीयते न वायुनिष्ठमित्यर्थः असौ । इयमित्यर्थः । इय गकारादिगतोत्पत्त्यादिप्रतीतिः । बाधकाभावादिति । गकारादिगतत्वेनोत्पत्त्यादिस्वीकारे यथा शुक्तौ रजतत्वस्वीकारे बाधक तद्वत्र किमपि बाधकमित्यर्थः । अन्यथा घटोत्पत्तिसिद्धिरपि न स्यादिति भावः । प्रत्यभिज्ञानं सोयमिति ज्ञानं । अनयैव उत्पत्त्यादिप्रतीत्यैव । सा प्रत्यभिज्ञा अत्र प्रत्यभिज्ञानस्य बाधकत्वे । एवं उत्पत्त्यादिज्ञानप्रत्यभिज्ञानयोः समबलत्वे । उत्पत्तीति । प्रत्ययद्वयस्य बाध्यत्वापेक्षयैकस्य प्रत्यभिज्ञानस्य बाध्यत्वे लाघवमित्यर्थः । उभयोः । उत्पत्त्यादिप्रत्ययप्रत्यभिज्ञानयोः । ननु विरोधिविषयकप्रत्ययद्वयस्य कथं प्रमात्वमित्याह । कथमिति । एतत् । उभयोः प्रमात्वं । प्रत्यभिज्ञान-

स्यात । तथा चगत्वावच्छिन्नाभिन्नोयमित्यर्थः । तथामति । प्रात्यभिज्ञनस्य गत्वावच्छिन्नभेदाभावविषयत्वे । ननु सोयमिति । गकारोयमित्यत्र गत्वावच्छिन्नाभेदो बुध्यते सोयमित्यत्र श्रुतपूर्वगकाराभेद एव बुध्यते । ननु गत्वावच्छिन्नाभेद इत्यर्थः । सोयमित्यस्येति । श्रुतपूर्ववृत्तिगत्वावच्छिन्नाभेदे बुध्यते न तु श्रुतपूर्वगकाराभेद इत्यर्थः । ननु तर्हि सोय गकारोयमिति प्रत्ययद्वयस्यावैलक्षण्य स्यादित्यत आह गकारोयमिति । तद्वृत्तित्व श्रुतपूर्वगकारवृत्तित्व । ननु तथापि गत्वजातीयोयमिति प्रत्ययः स्यात् न तु कारोय सोयमित्याह । तथा चेति । जातित्वानवभासात् । गत्वजातित्वानवभासात् । शब्दो ध्वनिभिन्नशब्दः तेन ध्वनेरनित्यत्वेन नांशतो बाधः । उक्तदोषात् । उत्पत्तिविनाशप्रत्ययविरोधात् । नन्वनुमानसिद्ध शब्दानित्यत्वं तर्हि कल्प्यतामुत्पत्तिविनाशप्रत्यययोः प्रत्यभिज्ञाबाध्यत्व मत आह शब्दस्येति तथा च हेत्वसिद्धिरिति भावः । हेत्वसिद्धि निराकरोति । शब्द इति रूपादौ व्यभिचारवारणाय साक्षादिति अप्रयोजकत्व विवृणोति शब्दस्येति । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति रूपत्वेन कारणत्वमित्यर्थः । वायुस्तु न प्रत्यक्ष इत्यभिप्रायेणेदं यदि च वायुः प्रत्यक्ष इत्याग्रहस्तदा बहिरिन्द्रियग्राह्यत्वे स्पर्शवत्त्वमपि प्रयोजक वाच्यमिति ॥

**अन्ये तु वर्णो नित्यो ध्वन्यान्यशब्दत्वात् स्फोटवदित्याहुस्तदप्यत एव निरस्तं दृष्टान्तासिद्धेश्च । न हि वर्णान्यः स्फोटात्मकः प्रमाणसिद्धोस्ति । नन्वस्तिसः तथा हि पदानां वर्णकदम्बरूपाणामाशुविनाशितया मेलनासम्भवान् अप्रत्यक्षत्वं तावन्निरूढं । तथा च तदप्रत्यये कुतोऽर्थप्रत्ययः स्यात्तस्माद्वर्णाभिव्यङ्ग्यः पदस्फोटः कश्चिदभ्युपेयो यतोऽर्थप्रत्यय**

इति तदशुद्धं स हि स्फोटस्ताद्वर्णव्यङ्ग्यः स्तावद् व्यक्तिमध्ये यत्किद्वर्णव्यङ्ग्यो वा ताद्वर्णाभिव्यक्तिव्यङ्ग्यो वा नाद्य आशुविनाशिनां क्रमिकाणां तेषां मेलनासम्भवात् । न द्वितीयो घकारमात्रोच्चारणे घटपद स्फोटप्रत्ययेऽर्थप्रत्ययापत्तेः वर्णान्तरवैफल्याच्च नान्त्यः तदसम्भवात् । अथ पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलम्भस्तद्व्यञ्जक इति चेत् तर्हि स स्वार्थप्रत्यायकोऽस्तु कृतं स्फोटेन । अथ पदप्रतीतिबलात्तसिद्धिरिति चेन्न तस्य क्रमविशेषवत्तावद्वर्णगोचरत्वात् । ननु तावद्वर्णगोचरप्रत्यय एव न सम्भवतीति चेन्न तावद्वर्णगोचरसंस्कारात् समूहालम्बनरूपतावद्वर्णगोचरस्मरणसम्भवात् । ननु तावद्वर्णमात्रं न पदम् अर्थाप्रत्यायकत्वात् अन्यथा नदीदीनयोरविशेषापत्तेः किन्तु आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपम् । न च तत्प्रत्ययः सम्भवतीति चेन्न चोरत्तत्वं हि तस्यानुपूर्वी अस्ति च तस्य प्रत्यक्षं चोत्तरं टंशृणोमीति प्रतीतेरिति दिक् ।

वैयाकरमतमाहात्म्ये त्विति । ध्वनौ व्यभिचारवारणाय ध्वन्यान्येति । स्फोटवदिति । तत्र पदस्फोटरूपपदार्थान्तरस्वीकारादित्यर्थः । अत एव विनाशादिप्रत्ययबलादेव । नन्वन्यथानुपपत्त्या विनाशादिप्रत्ययस्य प्रत्यभिज्ञाबाध्यत्वमेवोच्यतामित्यत आह दृष्टान्त इति ।

स्फोटं दूषयितुम्प्रतिपादयति । तथाहीत्यादिना । वर्णेकदम्बरूपाणां वर्णसमूहरूपाणां । अप्रत्यक्षत्वं । निरूढम् प्रसिद्धम् । तदप्रत्यये पदाप्रत्यये इति पदप्रत्ययाधीनमग्रे पदस्मरणं ततः पदार्थोपस्थिति शाब्दबोध इति क्रमः । तत्र पदघटितवर्णानां नाशात्पदप्रत्ययासम्भवे कुतः पदार्थोपस्थितिरिति भावः । इत्थं च यज्ज्ञानात्पदार्थोपस्थितिस्तादृशशब्दात्मको नित्योऽवश्यमभ्युपेय इत्याह तस्मादिति । यतो यज्ज्ञानाद्बोधः । नाद्य इति न तावद्वर्णव्यङ्ग्य इत्यर्थः । तत्र हेतुमाहाग्रिमेति न द्वितीय इति तावता मध्ये यत्किञ्चिद्वर्णव्यङ्ग्यस्तदा घकाराद्वारेण घटपदस्फोटप्रत्ययः स्यादित्यर्थः । ननु वर्णान्तरत्वे घमात्रादपि प्रत्ययो जायत एवेत्यत आह वर्णान्तरेति । एकस्यापि व्यञ्जकत्वादिति भावः । तदसम्भवात् । तावद्वर्णाभिव्यक्त्यसम्भवात् । ननु पूर्वपूर्ववर्णानामुच्चारणे सति वर्णानाम्प्रत्ययाणि तैश्च संस्कारा जन्यन्ते तत्सहितान्त्यवर्णोपलम्भस्य स्फोटव्यञ्जकत्वमित्याशयेनेति । स एव चरमवर्ण एव । ननु स्फोटं विना तावद्वर्णगोचरपदप्रत्यय एव न सम्भवतीत्याशयेनेति । तत्सिद्धिः । क्रमविशेषवत् आनुपूर्वीविशेषवत् यदा पदे आनुपूर्वीविशेषो बुध्यते तथा तावद्वर्णा अपि बुध्यन्त एवेत्यर्थः । तत्समूहालम्बनेति । तावद्वर्णानुभवैस्तावत्संस्कारा जन्यन्ते तत्संस्कारैश्चरमवर्णरूपोद्बोधकसहकारेण निखिलवर्णगोचरस्मृतिरित्यर्थः । तथा च तावद्वर्णगोचरस्मृतिरेव पदज्ञानमिति भावः । अथ तावद्वर्णानां पदत्वाभावं शङ्कते नन्विति तथा च क्रमिकतावद्वर्णानामेवार्थप्रत्यायकत्वमिति भावः । अन्यथा व्युत्क्रमवर्णानामर्थप्रत्यायकत्वे अविशेषेति वर्णानां तुल्यत्वाबदीति वर्णसमुदायाद्धीनबोधः स्यादिति भावः । रूपमित्यनन्तरं पदमित्यनुषज्यते । तत्प्रत्ययः । आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपपदप्रत्ययः घोत्तरत्वमिति घाव्यवहितोत्तरत्वन्तस्यानुपूर्वीत्यर्थः । तस्य आनुपूर्वीविशेषस्य ॥

नन्वर्थापत्तिरपि प्रमाणान्तरं तथा हि पीनो देवदत्तो दिवा न भुङ्क्ते इति प्रत्ययानन्तरं दिवसेऽभोजिनः पीनत्वं रात्रिभोजित्वमन्तरेणानुपपन्नमिति तत्कल्पयति । न चात्र प्रत्यक्षादि प्रमाणं किन्त्वनुपपत्तिज्ञानमेव सैवार्थापत्तिरिति चेन्न केवलव्यतिरेकिणैवोपपत्तेस्तथा हि देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् यन्नैवं तन्नैवं यथ केवलमभोजीति अर्थापत्तिपदं केवलव्यतिरेकिण एव नमानन्तरमिति संक्षेपः ॥

अर्थापत्तिः प्रमाणान्तरमिति मिमांसकमतमित्याशङ्कते । नन्विति । तत् रात्रिभोजनं अत्र रात्रिभोजने । अनुपपत्तिज्ञानमेव दिवसेऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमिति ज्ञानमेव । अथ केवलव्यतिरेक्यनुमानेनैवोपपत्तौ कृतं प्रमाणान्तरेणेत्याह केवलेति दिवेति । रोगियोगिभिन्नत्वे सतीति विशेषणीयन्तेन दिवसे रात्रौ च भोजनमन्तरेणापि रोगियोगिनोः पीनत्वसत्त्वेऽपि न क्षतिः । तथा च रोगियोगिभिन्नत्वे सति दिवाऽभुञ्जानत्वे च सति पीनत्वादिति हेत्वर्थः । पीनत्वस्य भोजनव्याप्यत्वावधारणात् । प्रत्यक्षादिना दिवाभोजनबाधे रात्रिभोजनमनुमितौ भासत इति भावः । यन्नैवं यो रात्रौ न भुङ्क्ते । तन्नैवं दिवाभुञ्जानत्वे सति पीनो नेत्यर्थः । नन्वर्थापत्तिपदेन पृथङ्निर्देशः कथमित्य आहार्थापत्तीति ॥

अविदितवक्तृकः शब्दविशेष ऐतिह्यं नाम स यदि मानान्तरं तदा शब्द एव न चेत् प्रमाणमेव नेत्युभयथापि न मानान्तरमिति सिद्धं चत्वारि

प्रमाणानीति । ननु सर्वमिदं प्रमात्वसिद्धौ स्यात् तदेव तावदसिद्धं न हि तत्प्रत्यक्षं ज्ञानस्यातीन्द्रियत्वात् अन्यथा ज्ञानतज्ज्ञानानां ज्ञानमेव स्यात् न तु विषयान्तरसञ्चार इति । अत्रगुरवः स्वप्रकाशमेव ज्ञानं घटादिकमिव स्वात्मानं स्वाधिकरणमात्मानञ्च विषयी करोति अत एव सर्वमेव ज्ञानं घटमहञ्जानामीत्याकारम् । इत्थञ्च ज्ञानस्य मितिमातृमेयविषयत्वात् त्रिपुटीप्रत्यक्षताप्रवाद इत्याहुस्तन्न चक्षुर्ज्जन्यघटज्ञानादिना स्वात्मनो विषयीकर्त्तुमशक्यत्वात् चाक्षुषादिज्ञाने विषयसन्निकर्षयोरपि हेतुत्वात् न चोत्पद्यमानं ज्ञानं पूर्वमस्ति सन्निकृष्टम्वा कथम्वा चक्षुषा आत्मविषयकं ज्ञानं जायते चाक्षुषादिज्ञाने उद्भूतरूपवत एव द्रव्यस्य योग्यत्वात् अन्यथा आकाशस्यापि चाक्षुषादिग्रहापत्तेः ॥

ननु मास्त्वर्थापत्तिः प्रमाणान्तरं परन्त्वैतिह्यं तु प्रमाणान्तरं भविष्यतीत्याशङ्कते । अविदितोऽविनिर्णीतः कर्त्ता यस्यैतादृशो यः शब्दविशेषः स ऐतिह्यनामप्रमाण तस्य शब्देन्तर्भावः । यथा नदीतीरे पंचफलानि सन्तीत्यादिशब्दविशेषोऽनिर्णीतवक्तृकशब्द एवान्तर्भवतीति । एतादृशब्दविशेषः । सक्षेप इति । चेष्टापि प्रमाणांतरं भविष्यतीति चेत् तत्र यदि व्याप्त्यादि धीस्तदानुमितावन्तर्भावः यदि च लिप्यादिवच्चेष्टाया संकेतग्राहकशब्दस्मारकत्वं तदा शब्द एवान्तर्भावः । एवं संभवोपि न मानान्तरं सहस्रे शतमस्तीति सहस्राकृतसंभवोमानमिति दिक् ॥ अथ

प्रमायाः करणं प्रमाणमित्युक्तं तच्च संभवति प्रमात्वस्याज्ञानादिति सिंहावलोकनन्यायेनाह । नन्विति । तद्देव । प्रमात्वमेव । अथ भट्टमतमीन हीति तत्प्रमात्मकज्ञानस्य मनोयोग्यत्वान्मनसैव ज्ञानप्रत्यक्ष भविष्यतीत्यत आहान्यथेति । अन्यथा । ज्ञानस्यैन्द्रियकत्वे । तथा च ज्ञानविषयकज्ञानाना प्रत्यक्षत्वेऽनवस्था स्यादिति भावः । ननु तत्र विषयान्तरसंचाराचानवस्थेत्यत आह । नत्विति । विषयान्तरसंचारे मानाभावादित्यर्थः । विषयान्तरसञ्चारे सत्यपि तत्तज्ज्ञानादिविषयसमुद्भवाया ज्ञानधारान्तर्गतायाः कस्याश्चिज्ज्ञानव्यक्तेः प्रत्यक्ष स्यादिति ज्ञानस्यातीन्द्रियत्वमिति भावः । ज्ञानजनकसामग्र्या एव ज्ञानग्राहकत्वमिति कथ ज्ञानस्यातीन्द्रियत्वमिति प्राभाकरमतमुत्थापयति । अत्र गुरव इति । स्वप्रकाशमेवेति स्वमेवस्वस्य ग्राहकं तथा च यथा ज्ञानं घटादिकं गृह्णाति । तथा स्वस्यस्वरूपं स्वाधिकरणमात्मानं गृह्णातीत्यर्थः । नचायं घट इत्याकारकज्ञाने ज्ञानात्मनः कथं विषयता भविष्यतीत्यत आहात एवेति । अत एव घटांशज्ञानांशात्मांशाना विषयत्वादेव । मितिर्ज्ञानं । माता प्रमाता आत्मेति यावत् मेयोघटः । बहिरिन्द्रियजन्यज्ञानेनात्मनोऽविषयीकरणात्स्ववाद इत्युक्तम् । तथा च निर्युक्तिकप्रवादो नश्रद्धेय इति भावः । तद्देव । त्वाह चक्षुरिति । चाक्षुषादीति चक्षुरादीनामात्मना सहसन्निकर्षाभावादिति भावः । ननूत्पद्यमानमात्मविषयकमेव ज्ञान पूर्वं भविष्यतीत्यत आह नेति । स्वस्य स्वपूर्ववृत्तित्वाभावादिति भावः । ननु मास्तु स्वस्य स्वपूर्ववृत्तित्व तथाप्यात्मनि संनिकृष्टं भविष्यतीत्यत आह संनिकृष्टेति । स्व विषयकज्ञानस्योत्पत्तेः पूर्वं सन्निकृष्टत्वाभावादिति भावः । अथ ज्ञानस्य स्वप्रकाशकत्वादुत्पद्यमानं स्वमेव स्वविषयसन्निकृष्ट भविष्यतीत्यत आह कथमिति । तथा चात्मनो रूपवत्वाभावाच्च चक्षुर्योग्यत्वमित्यर्थः । अन्यथा नीरूपस्यापि चक्षुर्योग्यत्वे । ज्ञानेन स्वविषयघटादौ ज्ञाततोत्पद्यते तया च ज्ञानमनुमीयत इति ।

भट्टास्तु ज्ञानं तावत्स्वविषये ज्ञातताख्य फलञ्जनयतीति निरूढं तयैवानुमेयं ज्ञानमित्याहु स्तदपि न ज्ञाततया निरस्तत्वात् । ज्ञानरूपस्य साध्यस्याप्रसिद्धौ अनुमानासम्भवाच्च उच्यते मनसैव ज्ञानं गृह्यते योग्यत्वात् न चैवं तज्ज्ञानमपि स्यात् एवं तज्ज्ञानमपीत्यनवस्था । विषयान्तरसञ्चारसामग्र्याः प्रतिबन्धकत्वेन कस्यचिज्ज्ञानस्य मनसाऽग्रहात् तत्प्रतिबन्धकत्वे किम्मानमिति चेत् फलानुदय एवेति संक्षेपः । तथापि तस्य प्रामाण्यं केन गृह्यते न तदनुमानेन ग्रहीतुं शक्यं साध्याप्रसिद्धेः । अत्र भट्टाः ज्ञाततया ज्ञानानुमितिर्ज्ञायमाना प्रामाण्यमपि विषयीकरोतीत्याहुः तन्न ज्ञाततया हि ज्ञानमात्रस्य व्याप्तिर्गृहीता प्रमात्वविशिष्टस्य वा नाद्यः ॥

भट्टमतं दूषयितुमुपन्यस्यति । भट्टास्त्विति निरूढं प्रसिद्धं । तया ज्ञाततया । ज्ञाततायां इति । नष्टेपि घटे ज्ञातो घट इति प्रतीतेस्तत्र घटस्याभावाज्ज्ञानेन भावकार्यरूपा ज्ञातता समवायिकारणं विना कथमुत्पाद्येति पूर्वं निरस्तत्वादित्यर्थः । नन्वियं ज्ञातता घटत्वप्रकारकघटविषयकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वादित्यनुमानाज्ज्ञातता दूरापास्तेत्यत आह ज्ञानस्येति । तत्र मते ज्ञानस्यातीन्द्रियत्वाज्ज्ञानरूपसाध्यस्याप्रसिद्धिरित्यर्थः । भट्टमताभिप्रेतं ज्ञानस्यातीन्द्रियत्वं खण्डयति । मनसैवेति । योग्यत्वात् योग्यात्मविशेषगुणत्वात् । एवं ज्ञानस्य मनोयोग्यत्वे । तज्ज्ञानमपि । एवं मनोयोग्यं तज्ज्ञानमपीति

ज्ञानविषयकज्ञानमपि मनोग्राह्यं स्यादित्यनवस्थेत्यर्थः । विषयान्तरेति । विषयान्तरसंचारस्य प्रतिबन्धकत्वात्तत्सामग्र्या अपि प्रतिबन्धकत्वमिति धारान्तः पातिनः कस्यचिज्ज्ञानस्य मनोग्राह्यत्वाभावाच्चानवस्थेत्यर्थः फलानुदय इति । मध्ये ज्ञानान्तरेच्छा कृतिसुखादीनां जायमानत्वाच्च ज्ञानपरम्परारूपफलोदय इत्यर्थः । तुष्यतुदुर्जनन्यायेन शङ्कते तथापीति तथापि । ज्ञानस्यातीन्द्रियत्वेपि । तस्य ज्ञानस्य तदनुमानेन । ज्ञातता लिङ्गकज्ञानानुमानेन । साध्येति । तव मते ज्ञानस्यातीन्द्रियत्वाज्ज्ञानरूप साध्याप्रसिद्धिरित्यर्थः । साध्याप्रसिद्धिरूप दूषणमाच्छाद्य भट्टमताभिप्रेत स्वतोग्राह्यत्वमाहात्र भट्टा इति । यद्वा । तदनुमानेन प्रामाण्यानुमानेन अनुमानं तु इदं ज्ञानं प्रमा सवादि प्रवृत्तिजनकत्वादिति बोध्य साध्याप्रसिद्धेः । प्रामाण्यरूपसाध्याप्रसिद्धेः । ज्ञाततयेति । अयमर्थः भट्टमते ज्ञानस्यातीन्द्रियत्वेपि ज्ञानानुमापिका विषयनिष्ठा ज्ञातता प्रत्यक्षा तथा च । ज्ञाततालिङ्गकानुमानरूपया ज्ञानग्राहकसामग्र्या प्रामाण्य गृह्यत इति यावज्ज्ञानग्राहकसामग्रीग्राह्यमिति निखिलमीमांसकाः तदेव स्वतस्त्वं नेति नैयायिकाः । भट्टमते तु ज्ञातताजनकज्ञानानुमाने स्वजन कीभूतविषयस्य भानं व्यवसायरूपप्रत्यासत्तेः सत्त्वात् । विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषय इति तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं विषयी क्रीयत इति ।

ततो ज्ञानमात्रं सिद्ध्येन्न तु तत्प्रमात्वमपि साध्यतावच्छेदकरूपेण साध्यं व्याप्त्या सिद्ध्येन्न तु रूपान्तरेण अन्यथा वह्निव्याप्यो धूम इति ज्ञानाद्द्रव्यत्वेन दीपत्वेन दहनसिद्ध्यापत्तेः । नान्यथः व्यभिचारात्साध्याप्रसिद्धेश्च । गुरवस्तु स्वप्रकाशमहिम्ना स्वमिव स्वप्रामाण्यमपि सिद्ध्यतीत्याहुः तन्न स्वप्रकाशतायाः

असिद्धेः। किञ्चैवं ज्ञाने प्रामाण्यसंशयो न स्यात् ज्ञान-ग्रहे प्रामाण्यनिश्चयान्निश्चिते च संशयायोगात् अग्रहे स्वप्रकाशग्राह्यताव्याघातात् धर्म्मिज्ञानाभाव-वाच्च समानधर्म्मवत्तया धर्म्मिज्ञानस्यान्वयव्यतिरेका-भ्यां संशयहेतुत्वावधारणाच्च ॥

तत इति। ज्ञाततारूपहेतुना ज्ञानत्वविशिष्टस्य साध्यस्य व्याप्ति ग्रहादनुमित्या ज्ञानत्वेन रूपेण ज्ञानसिद्धिर्न तु तज्ज्ञानप्रामाण्यसिद्धिरित्यर्थः। तदेवाह साध्यतेति। ज्ञाततायाः प्रमात्वविशिष्टस्य व्याप्यत्वे बाधकमाह। नान्य इति। व्यभिचारादिति। इयं ज्ञातता प्रमाजन्या ज्ञाततात्वादित्यत्र यत्र ज्ञाततात्वं तत्र न प्रमाजन्यत्व भ्रमजन्यज्ञात तायां व्यभिचारादित्यर्थः। प्रमाजन्यज्ञाततात्वं हेतुर्भविष्यतीति न व्यभि चार इत्यत आह साध्येति। गुरवस्त्विति। यथा स्वस्मिन् स्वं विषयो भवति तथा स्वनिष्ट प्रामाण्यमपि विषयो भवतीत्यर्थः। अयं भावः ज्ञानजनकसामग्र्या ज्ञानग्राहिकया घटत्ववति घटत्वप्रकारकज्ञानत्वरूप प्रामाण्यं गृह्यते घटमहं जानामीत्याकारकमेवज्ञानज्ञानं। तत्र चक्षुषा घटत्वतदुभयवैशिष्ट्यं गृह्यते मनसा च ज्ञानज्ञानत्वं तदुभयवैशिष्ट्य प्रकारत्वं च गृह्यत इति गुरुमते प्रामाण्यस्य स्वतोग्राह्यत्वमिति स्वेति ज्ञानस्येति पूरणीय। सिध्यसिद्धिव्याघातादाह किञ्चेति। एवं प्रामा ण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वे। तथा च यदि ज्ञान ग्रहीतं तर्हि तद्गत प्रामाण्य गृहीतमिति। यदि च ज्ञान न गृहीतं तदा ज्ञानरूप धर्मिणोऽज्ञानाच्च ज्ञानधर्मिकप्रामाण्यसंशय इति। ननु मास्तु धर्मि ज्ञान संशयहेतुरित्यत आह समानेति। पुरुषत्वपुरुत्वाभावकोट्योः समा नोधर्म उर्ध्वत्वादिः। तद्वद्धर्मिज्ञानस्यान्वयव्यतिरेकाभ्यां हेतुत्वमित्यर्थः। अथ जानामीति प्रतीतिबलाज्ज्ञानं मनोग्राह्यमिति नातीन्द्रियं तथाचानु

व्यवसायेन व्यवसाये गृह्यमाणे व्यवसायविषयधर्मधर्मिवत्तदुभयवैशिष्ट्यमपि विषयीकरोति व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वादिति ।

**मुरारिमिश्रास्तु तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यं तच्च प्रथमानुव्यवसायेनैव गृह्यते तथा हि घटत्ववांस्तावद्व्यवसायेनोपनीतस्तद्विशेष्यकतासंसर्गरूपाज्ञाने मनसा गृह्यते विशेषणस्य तद्वतः पूर्वमुपस्थितत्वात् । न च मनसो वहिरर्थप्रकाशासामर्थ्य उपनयसहकारेण तस्य वहिरर्थप्रकाशकत्वात् । कथमन्यथा कविकाव्यादौ मूलभूतं ज्ञानं कथम्वाऽनुव्यवसाये विषयप्रतिभानं घटत्वमपि व्यवसायेनैवोपनीतमतस्तत्प्रकारकता विषयतावत्सुग्रहा इत्युभयस्यैकत्र ग्रहेण गृहीतं प्रामाण्यमिति ॥**

स्वाश्रयग्राहकेण गृह्यत एवेत्यभिप्रायवतां मतमाह मुरारिमिश्रास्त्विति । तद्वद्विशेष्यधर्मत्वेसति घटत्ववद्विशेष्यत्वेसति । तत्प्रकारकत्वं घटत्वप्रकारकत्व । तच्चेति । अयं घट इति व्यवसायः । ततो ज्ञानज्ञानत्वनिर्विकल्पक । ततो घटमहं जानामीति प्रथमानुव्यवसायस्तत्र प्रामाण्यं गृह्यत इत्यर्थः । अत्रैवकारेण विलम्बाभावः सूच्यते । तथाचैतन्मते यावत्स्वाश्रयग्राहकेण गृह्यत एव न वेति विप्रतिपत्तिरिति भावः । ज्ञानज्ञानस्य यावद्विषयविषयकसाक्षात्कारतया धर्मधर्मिवत्तद्वैशिष्ट्यस्यापि भानात्व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वादित्यभिप्रेत्याह घटत्ववानिति । तावद्व्यवसायोपनीतः अयं घट इति व्यवसायलक्षणसन्निकर्षेण सन्निकृष्टः अतः घटत्वव्यवसायोपनयात् तद्वद्विशेष्यताकसंसर्गरूपज्ञानेन घटत्ववद्विशेषताकः संसर्गो यस्य एतादृशव्यवसायरूपज्ञानेन मन-

सा गृह्यत इत्यर्थः। अथ घटत्ववतो विशेषणतयैव भानं न तु संसर्गविधयेत्यत आह विशेषणस्येति। तद्वतः। घटत्ववतः। पूर्वं अनुव्यवसायात्पूर्वं। ननु मनसो बहिरस्वातन्त्र्याद्घटवतः कथं संसर्गविधया भानमित्यभिप्रायवानाह। स चेति। उपनयेति। व्यवसायोपनीतं घटादिकमनुव्यवसाये भासते। तथा च मनो बहिः पदार्थग्रहणे न स्वतन्त्रं। परं तु लौकिकालौकिकसन्निकर्षद्वारा बहिः पदार्थग्राहकं भवत्येवेत्यर्थः। अन्यथोपनयसहकारेणापि बहिः पदार्थायोग्यत्वे। अतीतानागतपदार्थानां लौकिकसन्निकर्षाभावेपि ज्ञानलक्षणालौकिकसन्निकर्षस्य सत्त्वात्काव्यमूलभूतवाक्यार्थज्ञानमित्यर्थः। कथं वेति। अयं घट इति पूर्वं व्यवसायस्ततो घटमहं जानामीत्यनुव्यवसायस्तत्र व्यवसायलक्षणोपनयं विना कथं घटादिरूपविषयभानमित्यर्थः। घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वं प्रामाण्यं तत्र सत्यन्तभानप्रकारमुक्त्वा घटत्वप्रकारकत्वभानप्रकारमाह घटत्वमपीति। व्यवसायोपनीतमित्यनन्तरं गृह्यत इत्यनुषज्यते। अतो घट इति व्यवसायोपनीतत्वात्। तत्प्रकारता घटत्वप्रकारता। विषयतावत्। घटत्ववद्विशेष्यकत्ववत्। यथा घटत्ववद्विशेष्यकत्वं सम्बन्धविधया व्यवसायोपनीतमनुव्यवसाये भासते तथा घटत्वप्रकारकत्वमित्यर्थः। उभयत्र उभयमित्यर्थः। एकत्रेति। एकत्रानुव्यवसाये घटत्ववद्विशेष्यकत्वं घटत्वप्रकारत्वं चोभयं गृहीतं तदा गृहीतमेव प्रामाण्यमित्यर्थः॥

तदपि न एवं हि तद्विष्यकत्वं तत्प्रकारत्वं च गृहीतं। न चैतावदेव तत्प्रामाण्यं किन्तु तद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वं न च तद्वद्विशेष्यकत्ववैशिष्ट्यमनुव्यवसायो ग्रहीतुमर्हति तद्वद्विशेष्यकत्वस्य पूर्वमनुपस्थितेः संसर्गविधया हि विशेष्यता प्रकारता च भासते। किञ्चैतदपि न प्रामाण्यं वह्निगुञ्जयोर्गुञ्जा-

वह्नी इति भ्रमेऽतिव्याप्तिः अस्ति हि तत्र वह्निविशेष्यकत्वं वह्नित्वप्रकारकत्वं च किन्तु तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमित्युक्तं । न चावच्छेद्यावच्छेदकभावः प्रथमं ग्रहीतुं शक्यः तद्विशेष्यकत्वस्य पूर्वमप्रतीतेः ॥

अथ रङ्गरजतयोरिमे रङ्गरजते इति समूहालम्बनस्य भ्रमसाधारण्यात्तद्वद्विशेष्यकत्वे सति तत्प्रकारत्वमात्रं प्रामाण्यमित्यभिप्रायवानाह । तदपि नेति । तदपि निरुक्तमिश्रमतमपि । न चैतावदेवेति । तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रामाण्यस्य रङ्गरजतयोरिमे रजतरङ्ग इति समूहालम्बनभ्रमेऽपि सत्त्वादिति भावः । यद्वा ननु तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वमात्रं प्रामाण्यं न तस्यानुव्यवसायोत्तरं व्यवसायनिष्ठप्रामाण्यसंशयो न स्यात्तथा च तद्वद्विशेष्यकत्वावच्छिन्नं तत्प्रकारकत्वं तच्च नानुव्यवसायगम्यमित्यभिप्रायवानाह । तदपिनेति किन्त्विति तद्वद्विशेष्यकत्वं संसर्गविधयानुव्यवसाये भासते न तु प्रकारतयेति तद्वैशिष्ट्यं न व्यवसाये भासते तथा च यदि तद्वद्विशेष्यकत्ववैशिष्ट्यं न व्यवसाये भासते तदा व्यवसायोपनीतं तद्वद्विशेष्यकत्ववैशिष्ट्यं नानुव्यवसाये भासत इति भावः । अनुपस्थितेः । विशेषणतयानुपस्थितेः । संसर्गेति संसर्गविधयाभातस्य तद्वद्विशेष्यकत्वस्य तत्प्रकारकत्वस्य च वैशिष्ट्यं नानुव्यवसाये भासत इति भावः । अथ विशिष्टज्ञानसमूहालम्बनयोर्वैलक्षण्यान्यथानुपपत्त्या सम्बन्धिसम्बन्धोऽपि भासते तथा तद्वद्विशेष्यकत्ववैशिष्ट्यस्य व्यवसायोपनीतस्यानुव्यवसाये भानं भवत्येवेति विवक्षितप्रामाण्यमपि स्वतो ग्राह्यं भवत्येवेत्यत आह । किं चेति । तदपि । तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वमपि वह्नीति वह्न्यंशे गुञ्जात्वं प्रकारो । गुञ्जांशे वह्नित्वं प्रकार इति वह्निगुञ्जयोर्गुञ्जावह्नी इति भ्रमस्तत्र वह्नित्ववद्वि-

...कत्वं वह्नित्वप्रकारकत्वं च भासत इति तत्रातिव्याप्तिरित्यर्थः तद्वद्वि-
...कत्वविच्छेदेन तथा च वह्नित्ववद्विशेष्यकतावच्छेदकं वह्नित्वमिति-
...योर्गुञ्जावह्नीति भ्रमे वह्नित्वावच्छेदेन वह्नित्वप्रकारकत्वाभावान्न
... इति । न चेति । तथा चानुव्यवसाये घटत्ववद्विशेष्यकत्वेसति
...त्वप्रकारकत्वं गृह्यते न तु घटत्ववद्विशेष्यकतावच्छेदकघटत्वाव-
...ेन घटत्वप्रकारकत्वं गृह्यत इत्यर्थः तद्वद्विशेष्यकत्वस्य घटत्ववद्वि
...कत्वस्य अप्रतीतेरिति । विशेषणतयाऽप्रतीतेरित्यर्थः । घटत्ववद्विशेष्य-
...व्यवसाये संसर्गमर्यादया भासते न तु विशेषणतयेति तदवच्छेद्याव
...कभावो नानुव्यवसाये भासत इति भावः ।

अत्रोच्यते मास्तां प्रथमानुव्यवसायेन प्रामा-
ण्यग्रहः द्वितीयेन तु स्यात् तद्वद्विशेष्यकत्वस्य पूर्व-
प्रमानुव्यवसायेनोपस्थितेः । न चैवं प्रामाण्यस्यानु-
व्यवसायगम्यत्वे प्रामाण्यसंशयो न स्यादिति वाच्यम्
...दोषाद्यत्र प्रामाण्यं नानुव्यवसायेन गृहीतं तत्र
...यसम्भवात् अन्यथा पुरुषत्वसंशयोपि न स्यात्
...य चक्षुर्वेद्यत्वात् न चैवं प्रामाण्यस्य स्वतो ग्राह्य-
...मागतमसति प्रतिबन्धके यावदाश्रयानुव्यवसाय-
...ह्यत्वं हि मिश्रनये स्वतो ग्राह्यत्वं तच्च न प्रथमा-
...व्यवसायेनाग्रहात् एवञ्चसाध्यप्रसिद्धावनुमानमपि
ग्राहकं तद्यथा इदं पुरुषज्ञानं प्रमा करादिमति
...ष्यज्ञानत्वात् सम्प्रति जन्यज्ञानवत् यद्वा यन्नैवं तन्नैवं
...। घट इति व्यतिरेकी ॥

अथ प्रथमानुव्यवसायेन प्रामाण्यग्रहे तृतीयक्षणवृत्तिसंशयो न स्यात्तथा हि प्रथममयं घट इति व्यवसायस्ततो ज्ञानज्ञानत्वनिर्विकल्पकं ततो घटमहं जानामीत्यनुव्यवसायस्ततः प्रामाण्याप्रामाण्यकोटिस्मरणं ततो इदं ज्ञानं प्रमा न वेति संशयोऽनुभवसिद्धः स न स्यात् । प्रथमा व्यवसायेनावच्छेदकत्वांशस्याग्रहात्तद्धर्मवद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वग्रहे तद्धर्मवद्विशेष्यकत्वप्रकारत्वेन हेतुत्वात् । द्वितीयानुव्यवसायेन प्रामाण्यग्रहे तु प्रथमानुव्यवसायोपनीततद्धर्मवद्विशेष्यकत्वं गृह्यत एवेत्यप्रामाण्यग्रहस्समाधत्ते मास्तामिति । द्वितीयेनेति द्वितीयानुव्यवसायेन प्रामाण्यग्रहे सति तत एव निष्कम्पप्रवृत्तिर्भविष्यतीति भावः । तद्विशेष्यकत्वस्य विशेषणतया तद्विशेष्यकत्वस्य पूर्वं द्वितीयानुव्यवसायात्पूर्वं प्रथमानुव्यवसायेनेति । अयं भावः । यथा प्रथमानुव्यवसाये विशेषणतया व्यवसायोपनीतघटत्ववान् घटत्वं च भातम् घटत्वविशेष्यकत्वम् घटत्वप्रकारकत्वम् च संसर्गमर्यादया भातम् । तथा द्वितीयानुव्यवसाये प्रथमानुव्यवसायोपनीतं घटत्वविशेष्यकत्वं घटत्वप्रकारकत्वम् च विशेषणतया भातम् । अवच्छेदकत्वांशस्तु संसर्गमर्यादया भात इति घटत्ववद्विशेष्यकत्वावच्छेदेन घटत्वप्रकारकत्वभातमिति प्रामाण्यं गृहीतमेवेति । दोषवशात् प्रामाण्यग्रहप्रतिबन्धकीभूतदोषवशात् । अन्यथा संशयजनकीभूतदोषसत्त्वे संशयानुत्पत्तौ कुत इत्यत आह नन्विति । तस्य पुरुषत्वस्य । तथा च पुरुषत्वस्य चाक्षुषसामग्रीसत्त्वे पुरुषत्वसंशयजनकसाधारणधर्मवद्धर्मिज्ञानरूपसामग्र्या सत्या पुरुषत्वसंशयस्तथा प्रामाण्यग्राहकज्ञानग्राहकानुव्यवसायरूपसामग्रीसत्त्वेऽपि प्रामाण्यसंशयजनकसामग्र्या सत्या प्रामाण्यसंशय एव भवतीति भावः । एवं प्रामाण्यस्यानुव्यवसायगम्यत्वमिष्यमतविवक्षितस्वतोग्राह्यत्वाभावं व्यवस्थापयति आपातीति व्यवसायेत्वप्रामाण्यग्रहरूपप्रतिबन्धकसत्त्वेऽनुव्यवसायेन प्रामा[illegible] सर्वप्रामाण्यानां स्वाश्रयग्राहकानुमितिग्राह्यत्वस्य [illegible]

स्यादत उक्तं यावदिति । स्व प्रामाण्यं तदाश्रयो व्यवसायस्तस्यानुव्य सायग्राह्यत्वमित्यर्थः । प्रामाण्याश्रयीभूतव्यवसायग्राहकाणां यावद व्यवसायानां न प्रामाण्यग्राहकत्वं प्रथमानुव्यवसाये व्यभिचारादित्याह तच्चेति । तच्च स्वतस्त्वं च । अग्रहात् प्रामाण्याग्रहात् । इत्य इ प्रथमानुव्यवसायेन प्रामाण्याग्रहान्नश्रमताभिप्रेत यत्स्वाश्रयग्राह्य त्वरूपं स्वतस्त्वं निरस्तमिति भावः । अथ द्वितीयानुव्यवसायरूपसा ध्यप्रसिद्धावनुमानमपि प्रामाण्यग्राहकमित्याहैवञ्चेति । तथा च न साध्याप्रसिद्धिरिति भावः । तद्ग्राहकं । प्रामाण्यग्राहकं । तत् अनुमानं । सप्रतिजन्यज्ञानवत् अभ्यासदशोत्पन्नपुरुषज्ञानवत् । व्यतिरेकव्याप्त्यभि प्रायादाह यद्वेति यन्नैवं यत्प्रमा न तन्नैवं तत्कारादिमति पुरुषत्वप्रका-रकज्ञानमपि न ।

अन्ये तु प्रथम प्रामाण्याभाव एव प्रमाण्यं व्यतिरेकिणा साध्यं न च साध्याप्रसिद्धिः न हि व्यतिरेकिणा साध्यहेत्वोर्व्याप्तिर्गृह्यते किन्तु साध्याभावहेत्वभावयोरिति किन्तदप्रसिद्धा । न च साध्याप्रसिद्धौ तदभावासिद्धिः प्रतियोगिज्ञानसाध्यत्वात्तदभावस्येति वाच्यम् तस्य प्रतियोगिरूपत्वात् न च प्रतियोगिज्ञाने हि अभावज्ञानं कारणं प्रमाणाभावात् एवञ्च यद्ज्ञापकतया हेत्वभावो गृहीतस्तेन हेतुना तदभावः सिद्ध्यतीति । न च साध्याज्ञाने कथं तद्विशिष्टज्ञानरूपानुमितिः अप्रामाण्याभावविशेष्यकाया एवानुमितेरभ्युपगमादित्याहुः ॥

अथ प्रामाण्यरूपसाध्यप्रसिद्धिं विना व्याप्तेरग्रहात्कथं प्रामाण्यस्य परतो ग्राह्यत्वमिति पूर्वपक्ष चिन्तामणिमतमाह । अन्ये त्विति अयं भावः प्रथममप्रामाण्याभावरूपं प्रामाण्यं व्यतिरेकिणा साध्यं तत एव निष्कम्पप्रवृत्त्युपपत्तेः तदेव सिध्येत् पक्षधर्मताबलात्तद्वति तत्प्रकारकत्वमादाय सिध्यति । तथा हि अयं वह्नित्वेनानुभवः वह्नित्वाभाववति वह्नित्वप्रकारको न अवह्निवृत्ति प्रकारको वान दाहसमर्थमात्रविशेष्यकत्वे सति वह्नित्वप्रकारकत्वात् यन्नैवम् तन्नैवम् । यथा वह्न्यप्रमेति । अथाप्रामाण्याभावरूपसाध्याप्रसिद्धिरिति कथं व्यतिरेक्यनुमानम् । न च घटादावप्रामाण्याभाव रूपं साध्यं प्रसिद्धमिति वाच्यम् । तर्हि तद्वति तत्प्रकारकत्वरूपप्रमाण्यस्यच्छादौ प्रसिद्धस्य ज्ञाने भानसंभवादभावरूपसाध्यानुसरण व्यर्थमित्यभिप्रायवानाह न चेति । किन्त्विति । व्यतिरेकिणि साध्याभावव्यापकत्वं साधनाभावस्येति भावः । किमिति । तथा चाप्रामाण्या भावरूपसाध्यस्याप्रसिद्धत्वेपि न क्षतिरिति भावः । साध्याप्रसिद्ध अप्रामाण्याभावरूपसामाध्यप्रसिद्धौ । तदभावाप्रसिद्धिः अप्रामाण्याभावाभावरूपसाध्याभावाप्रसिद्धिः । प्रतियोगीति । अभावज्ञाने प्रतियोगिज्ञानं कारणम् । तथा च प्रामाण्याभावाभावज्ञानेऽप्रामाण्यभावज्ञानं कारणमित्यर्थः तस्य अप्रामाण्याभावाभावस्य । प्रतियोगीति अभावज्ञाने प्रतियोगिज्ञानं कारणम् न तु प्रतियोगिज्ञानेऽभावज्ञानम् तथा चाप्रामाण्याभावाभावस्याप्रामाण्यरूपत्वादप्रामाण्यज्ञाने नाप्रामाण्याभावज्ञानं कारणमित्यर्थः । यद्व्यापकतया साध्याभावव्यापकतया तदभावः सिध्यति । साध्याभावाभावरूपसाध्यं सिध्यति । तथा हि वह्न्यभावव्यापकतया धूमाभावो गृहीतस्तेन धूमेन हेतुना वह्निः सिध्यति तथा च प्रकृते वह्नित्वाभाववति वह्नित्वप्रकारत्वाभावरूपाप्रामाण्याभावरूपसाध्यम् । तदभावस्य व्यापकः दाहसमर्थभावविशेष्यकत्वेसति वह्नित्वप्रकारकत्वरूपहेत्वभाव इति दाहसमर्थमात्रविशेष्यकत्वेसति वह्नि-

त्वप्रकारकत्वेन हेतुना वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभावरूप साध्य सिध्यतीति । साध्याज्ञाने निरुक्तसाध्याज्ञाने । तद्विशिष्टज्ञानरूपा साध्यविशिष्टज्ञानरूपा । अप्रमाण्येति । विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयः कारणम् । तथा चाप्रसिद्धसाध्यकस्थले साध्यविशेषिकैवानुमितिस्तत्र पक्षतावच्छेदकविशिष्टपक्षज्ञानरूपविशेषणतावच्छेदकप्रकारकनिश्चयस्यापेक्षितत्वादिति भावः ।

**आस्तां तावत्तथापि तद्वति तत्प्रकारकत्वग्रहे उक्तैव गतिः । किन्तु करादिमति पुरुषत्वज्ञानहेतुत्वं केन ग्राह्यं अनुव्यवसायेनेति चेत् तर्हि पुरुषत्ववति तत्प्रकारकत्वग्रहः केन वार्य्यतां यतस्तमपहाय एव सूक्ष्मादर इति । अन्ये तु तत्प्रकारकज्ञानत्वमेव प्रामाण्य । न च रजतत्वप्रकारकं शुक्तिज्ञानमिति प्रमाणं स्यात् तदसिद्धेः । न हि यत्र यत्रास्ति तत्र तत्प्रकारकज्ञाने मानमस्ति कथन्तर्हि शुक्ताविदं रजतमिति व्यवहार इति चेत् तत्र व्यवहर्त्तव्यरजतत्वासंसर्गाग्रहात् रजत्वप्रकारकशुक्तौ प्रवृत्तिरपि तन्निष्ठताच्छेदकरजतत्वस्या संसर्गाग्रहात् ॥**

अस्तामिति । तत् । आप्रामाण्याभावरूपप्रामाण्यं तथा चाप्रामाण्याभावरूपं प्रामाण्यं व्यतिरेकेण साध्य तथाऽपि तद्वति तत्प्रकारकत्वग्रहे तु द्वितीयानुव्यवसायेन गृह्यत इत्युक्तैव गतिरित्यर्थः । न चाप्रामाण्याभावरूपं प्रामाण्य व्यतिरेकेण साध्यं तदेव वा सिध्येत्पक्षधर्मताबलात्तद्वति तत्प्रकारकत्वमादायैव सिध्यतीत्यत आह किं त्विति । अथ पुरुषत्वेनानुभवः पुरुषत्वाभाववति पुरुषत्वप्रकारको न करादिमति

रूपत्वज्ञानत्वादित्याद्यनुमानेन करादिमति पुरूषत्वज्ञानत्व केन ग्राह्य-
नत्यर्थः । हेतुग्रहे स्वतोग्राह्यत्वमिति शङ्कते अनुव्यवसायेनेति । तर्हि
रादिमति पुरुषत्वज्ञानत्वस्य स्वतोग्राह्यत्वे । तत्प्रकारकत्वग्रहः पुरुषत्व-
कारकत्वग्रहः । अत इति । तद्वितत् प्रकारकत्वरूपप्रमाणस्य द्वितीं
नुव्यवसायग्राह्यत्वं परित्यज्याप्रामाण्याभावरूपप्रामाण्य व्यतिरेकिणा
ाध्यमित्यादिकुस्र्ष्टिमात्रमित्यर्थः । अथ सर्वेषां ज्ञानानां यथार्थत्वा-
ामालक्षणे तद्वद्विशेष्यकत्व व्यर्थमिति प्राभाकरमतमाहान्ये त्विति तत्प्र-
रत्वमात्र प्रामाण्यं भ्रमसाधारणमित्याह न चेति । तदसिद्धे । रजतत्व-
ारकशुक्तिज्ञानस्यासिद्धेः । तत्र व्यवहर्त्तव्येति । रजतमिति व्यव-
र्विषयीभूतशुक्तौ रजतत्वासम्बन्धग्रहाभावाच्छुक्तौ रजतमिति व्यव-
र इत्यर्थः । इष्टेति । इष्ट रजतं तथा चेष्टतावच्छेदकीभूतरजतत्वा
सम्बन्धाग्रहाच्छुक्तौ रजतत्वप्रकारिका प्रवृत्तिर्भवत्वेवेत्यर्थः ।

अथ रजतत्वप्रकारकप्रवृत्तौ रजतत्वप्रकारकं
नं प्रमाण्यत्वे कारणं क्लृप्तं तथा च तेन विना कथं
क्तौ प्रवृत्तिस्स्यादिति चेन्न तत्रापि रजतत्वासंसर्गा-
स्य हेतुत्वात् । अथासंसर्गाग्रहस्याविशेषात्क्वचित्स
ादिनी प्रवृत्तिः क्वचिद्विसम्वादिनीति कुतो नियम
प चेन्न तद्वति तत्संसर्गाग्रहस्य तत्प्रकारकसम्वादि-
तदभाववति तत्संसर्गाग्रहस्य तत्प्रकारकविस-
दिन्यां प्रवृत्तौ हेतुत्वात् । अत्रोच्यते लाघवाद्रज-
संसर्गग्रहो रजतत्वप्रकारकप्रवृत्तौ हेतुः न तु
नत्वासंसर्गाग्रहो गौरवात् । न च शुक्तौ तदसम्भवः
ोषणज्ञानं विशेष्येन्द्रियसन्निकर्षस्तयोरसंसर्गाग्रह

त्र हि विशिष्टज्ञाने हेतुः। अस्ति चात्रापि विशेषणर-
गतत्वस्य ज्ञानं विशेष्यरूपशुक्तीन्द्रियसन्निकर्षस्तयो-
संसर्गाग्रहश्च । अथ रजतत्वेन्द्रियसन्निकर्षविरहा-
कथं तत्प्रकारकं प्रत्यक्षमिति चेत् सन्निहितं यत्र
जतं तत्र संयुक्तसमवायस्यान्यत्र ज्ञानस्य सन्निकर्षस्य
वात्। ज्ञानस्य सन्निकर्षत्वे किं मानमिति चेत् रजत-
प्रकारकं प्रत्यक्षमित्यवहि तत्रैव किं मानमिति
प्रकारिका प्रवृत्तिरिति संक्षेपः ॥

इति महामहोपाध्यायश्रीचूड़ामणिविरचितायां
न्यायसिद्धान्तमञ्जर्य्यां शब्दपरिच्छेदस्समाप्तः ॥

रजत्वासम्बन्धाग्रहस्य तत्प्रवृत्तिं प्रति कारणत्वमिति सङ्कते अथेति
तु तादृशप्रवृत्तौ रजतत्वप्रकारकं ज्ञानं हेतुस्तथापि रजतत्वासंसर्गा-
स्य कारणत्वं केन वार्यमित्यभिप्रायवानाह तत्रापीति । अविशेषात् ।
शुक्तिसाधारण्यात् । गौरवादिति । अभावद्वयप्रवेशे गौरवादित्यर्थः ।
संभवः रजतत्वसंसर्गग्रहासम्भवः । अत्रापि शुक्तौ रजतमिति ज्ञानेपि
त्र । असन्निहिते रजतत्वे तत्रैव शुक्तौरजतत्वप्रत्यक्ष एव तत्प्रकारिका
तत्वप्रकारिका । संक्षेप इति । अयं भावः प्रमापरत एवोत्पद्यते न तु
नः । अत्र यथा ज्ञानप्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्र-
पत्ति स्तथा ज्ञानप्रामाण्यं ज्ञानसामग्रीमात्रजन्यं नवेति विप्रतिपत्तिः ।
नसामान्यसामग्रीजन्यत्वे प्रमायाऽप्रमापेक्षया वैलक्षण्यं न स्यादिति ।
कजातीयसामग्रीसत्वे यथा पटयोर्वैलक्षण्यं तथा प्रमाप्रमयोरपीति
। प्रमायाः सामान्यसामग्रीजन्यत्वात्स्वत एवोत्पद्यते । अप्रमायास्तु
स्वरूपज्ञानव्यतिरिक्तसामग्रीजन्यत्वात्परतस्त्वमिति। अत्रोच्यते अप्रमाया

यथाद्दोषजन्यत्वं तथा प्रमाया अपि गुण । जन्यत्व तथाचानित्यप्रमात्व कार्यतावच्छेदकं बाधकमन्तरेण कार्यमात्रवृत्ति धर्मत्वात् अप्रमात्ववद्विति प्रत्यक्षप्रमाया भूयोवयवेन्द्रियसन्निकर्षः। आनुमितौ यथार्थलिङ्गकपरामर्शः उपमितौ सादृश्य ज्ञानं गुणः शब्दप्रमायां यथार्थवाक्यार्थज्ञानं गुण इति जन्यत्वात्प्रमा परतएवोत्पद्यत इति दिक् । तर्कार्णवे खेलनचञ्चला ये पश्यन्तु ते ग्रन्थममुम्मदीयं यतो निवेशा न्निखिलं निरीक्ष्य मुक्तोयि गौडा-णगुरुप्रमेयः ॥ १ ॥ श्रीमन्नृसिंहात्मजयादवेन श्रीरामकृष्णस्य गुरोः प्रसा-दात् विभाव्य सत्तर्कसमूहसारं व्याख्याकृता सा शुभदास्तु लोके ॥२॥ मदी ययत्नो हि न बुध्यते यैर्नायं हि यत्नः खलु तेषु योग्यः सुहृत्कदाचिद्वुवि-ताज्ञ दत्तः सूर्यक्रियाया घटकोप्यनन्तः । श्रीरामो जयति तराम् ॥ ३ ॥



महामण्डल शास्त्र प्रकाशक समिति प्रेस, बनारस, सिटी ।